श्रीमद्विद्वद्वरभट्टोत्पलाचार्य्यप्रणीता।

# आर्य्यासप्ततिः ।

श्री[illegible]

चंडेश्वरलालशास्त्रितत्श्रीमत्पण्डित रघुवरदत्तसूनु

मुकुन्दरामशर्मविरचितयाऽनुबोध

टीकयोपेता ।



मूल्य ४ आणका ।

# आर्य्यासप्ततिः।

( प्रश्नग्रन्थः ।

श्रीभट्टोत्पलाऽऽचार्य्यप्रणीता

गढवालदेशस्थढांगूमण्डलान्तर्गतखण्डग्रामनिवासि-
वडेथवालवंशावतंसश्रीमत्पण्डितरघुवरदत्त-
शर्मात्मजमुकुन्दरामरचितया ऽऽशु-
बोधाख्यया टीकयोपेता ।

सा च,

मुम्बय्यां

पाण्डुरङ्ग जावजी श्रेष्ठिना

स्वीये निर्णयसागराख्यमुद्रणालये संमुद्य

# भूमिका ।

अयि सहृदयाः तत्तदनेकविषयरत्नमकरप्रकीर्णो ज्योतिःशास्त्रपारावारो दुर्विगाहः सहसाल्पधियाम्, तत्तलस्पर्शिभिर्भृग्वादिभिर्महर्षिभिः सर्वसाधारणसौकर्यायोद्धृत्योद्धृत्य विषयरत्नानि संहितासूपन्यस्तानि यद्यपि तथापि कालनदीप्रवाहेण दुर्निवारेण विप्लवानीतस्ततः सङ्कीर्णानि विलीनानीव दौर्भाग्यात् इत्यवलोक्य गुरुजनचरणपरिचर्यालब्धप्रसादैर्विद्वद्भिर्भोयुकैर्जातकग्रहगणितशकुनकर्मविपाकप्रश्नशास्त्राणि पुनः समालिखानि तेष्वियमार्यासप्ततिः प्रश्नग्रन्थकालनिर्णयशैलीश्रीभट्टोत्पलविरचिता प्रश्नजिज्ञासूनामतीवोपयुक्तेति मत्वा श्रीपण्डितमुकुन्दरामशर्म्मणाऽनेकप्रमाणपोषितयाऽऽशुबोधया टीकयाऽलङ्कृता मयापि समालोचिता यथामति संशोधिता चाऽवश्यं सहृदयहृदयाह्लादिनी लब्धप्रचारा च भविष्यतीत्याशास्तेऽयं जनः ।

सदानन्दशर्मा काव्यतीर्थोपाधिकः
विमलीग्रामनिवासी रघुनाथकीर्त्ति-
महाविद्यालयस्य प्रधानाध्यापकः ।



श्रीगणेशाय नमः ॥

श्री पं० भट्टोत्पलाचार्य्यप्रणीता

# आर्य्यासप्ततिः ।

## मुकुन्दरामकृताऽऽशुबोधटीकासहिता ।

---

**रविशशिकुजबुधगुरुसित, रविजगणेशान्प्रणम्य भक्त्यादौ ।**
**वक्ष्येऽहं स्पष्टतरं, प्रश्नज्ञानं हिताय दैवविदाम् ॥ १ ॥**

श्रीसूर्यादीन् खेचरानीश्वरीं च, शम्भुं विष्णुं मां च तातं प्रणम्य ।
आर्यायायाः सप्ततेर्ह्याशुबोधां, टीकां कुर्वे प्रीतये हौरिकाणाम् ॥ १ ॥

तत्रादौ ग्रन्थकर्ता ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं समाप्तेऽपि ग्रन्थे तत्प्रचयगमनार्थं शिष्टाचारपालनेन शिष्यशिक्षार्थं चाशीर्नमस्कारलक्षणं मङ्गलमाचरति स्म । **रविशशीति** । अहं भट्टोत्पलः आदौ ग्रन्थारम्भे रविशशिकुजबुधगुरुसितरविजगणेशान् भक्त्या प्रणम्य रविः सूर्यः शशी चन्द्रमाः कुजो भौमः बुधः प्रसिद्धः गुरुर्बृहस्पतिः सितः शुक्रः रविजः शनिः गणेशः प्रसिद्धः—तान् नमस्कृत्य दैवविदां दैवं भाग्यं विदन्ति जानन्ति ते दैवविदः । "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधि"रित्यमरः । तेषां हिताय पथ्याय स्पष्टतरं अतिशयेन स्पष्टमिति स्पष्टतरं प्रश्नज्ञानं प्रश्नशास्त्रस्य विज्ञानं वक्ष्ये कथयिष्यामीति ।

अधुना ग्रहाणां दशभेदादिज्ञानेन प्रश्नशास्त्रविदो वाक्प्रशंसामाह ।

**दशभेदं ग्रहगणितं, जातकमवलोक्य निरवशेषम् ।**
**यः कथयति शुभमशुभं, तस्य न मिथ्या भवेद्वाणी ॥ २ ॥**

**दशभेदमिति** । दशभेदं ग्रहाणां दीप्तावस्थादिदशभेदमिदं तूक्तं च जातकपारिजाते "दीप्तः समुदितः स्वस्थः शान्तः शक्तः प्रपीडितः । दीनः खलस्तु विकलो भीतोऽवस्था दश क्रमात् ॥ १ ॥ स्वोच्चत्रिकोणोपगतः प्रदीप्तः स्वस्थः स्वगेहे मुदितः सुहृद्भे । शान्तस्तु सौम्यग्रहवर्गयातः शक्तोऽतिशुद्धः स्फुटरश्मिजालैः ॥ २ ॥ ग्रहाभिभूतस्त्वतिपीडितः स्यादरातिराश्यंशगतोऽतिदीनः । खलस्तु पापग्रहवर्गयोगान्नीचेऽतिभीतो विकलोऽस्तयातः ॥३॥" इत्यादि । दशभेदं बुद्ध्वा तथा ग्रहगणितं ग्रहाणां ग्रहलाघवसौरार्यादिपक्षेभ्यो ग्रहस्पष्टानयनगणितं च ज्ञात्वा निरवशेषं अवशेषरहितं समस्तमित्यर्थः । जातकं

जातकसम्बन्धि शास्त्रं अवलोक्य दृष्ट्वा य प्रश्नशास्त्रज्ञ शुभं शुभफलं अशुभं अशुभफलं च कथयति निगदति तस्य प्रश्नशास्त्रज्ञस्य वाणी वाक् मिथ्या मृषा न भवेत् न स्यादिति।

इदानीं तु गणकप्रष्टृकर्तव्य वृत्तद्वयेनाह ।

**रम्यतरे भूभागे, सम्पूज्य ग्रहगणं सनक्षत्रम् ।**
**पश्चात्प्रश्नविधानं, कुर्याद्येनाप्नुयात्सिद्धिम् ॥ ३ ॥**
**प्रष्टा मणिकनकयुतैः, फलकुसुमै राशिचक्रमभ्यर्च्य ।**
**पृच्छेद्यथाभिलषितं, भक्त्या विनयान्वितः प्रश्नम् ॥ ४ ॥**

**रम्यतर इति** । प्रष्टा मणिकनकयुतैरिति च । रम्यतरे अतिशयेन रम्यं सुन्दरमिति रम्यतरं तस्मिन् । भूभागे भुव पृथिव्या भाग एकदेश तस्मिन् सनक्षत्र नक्षत्रैरश्विन्यादिभि सहित ग्रहगण ग्रहाणा गण समूह त सम्पूज्य सम्यक्प्रकारेण पूजयित्वा तत पश्चात् प्रश्नविधान प्रश्नस्य विधान विचार कुर्यात् येन निमित्तेन सिद्धि आप्नुयात् लभेत । दैवज्ञ इति शेष । ततो भक्त्या निष्कपटतया विनयान्वित विनयेन नम्रतयान्वित युक्त प्रष्टा मणिकनकयुतै वैदूर्यादिमणिसुवर्णै र्युतैर्युक्तै फलकुसुमै फलपुष्पै राशिचक्र प्रश्नकुण्डलीं अभ्यर्च्य सम्पूज्य तत दैवज्ञतो यथाभिलषित यथेष्ट प्रश्न पृच्छेत् । एतादृशं जीवनाथेनापि प्रश्नभूषणे चोक्तम् । "शान्तो विवेकी शुद्धात्मा हिरण्यमणिसत्फलै । दैवज्ञ प्रेमभावेन सम्पूज्यार्थं निवेदये"दिति । वराहेण तु दैवज्ञनिवासस्थानलक्षण बृहत्संहितायां विशेषतया चोक्तम् "स्थान पुष्पगुहासि भूरिफलभृत्स्निग्धवृत्तिच्छदाऽसत्पक्षिन्युतसत्सङ्गितरुच्छायोपगूढ समम् । देवर्षिद्विजसिद्धसाधुनिलयं सत्पुष्पसस्योक्षित सत्स्वादूदकनिर्मलत्वजनिताऽऽह्लाद च सच्छाद्वल" मिति ॥ प्रष्टृलक्षण तु प्रश्नतन्त्रे विशेषेणोक्तम् । "ऋजुरयमनृजुर्वाय प्रष्टा पूर्वं परीक्ष्य लग्नबलात् । गणकेन फल वाच्य दैव सवितस्त स्फुरति ॥ १ ॥ लग्नस्थे शशिनि शनौ केन्द्रस्थे ज्ञे दिनेशरश्मिगते । भौमज्ञयो समदृशा लग्नगचन्द्रेऽप्यृजु प्रष्टा ॥२॥ लग्ने शुभग्रहयुते सरलः क्रूरान्विते भवेत्कुटिल । लग्नेऽस्ते सौम्यदृशा विधुगुरुदृष्ट्या च सरलोऽयम् ॥ ३ ॥ यदि गुरुबुधयोरेक पश्यत्यस्ताधिप च रिपुदृष्ट्या । तत्कुटिल प्रष्टा खल्वनयोरपि सौम्यदृष्टित्त साधु" रिति ॥४॥ यदा यद्येकप्रष्टा युगपद्बहूनि प्रश्नानि पृच्छेत् तदा तु किं कर्तव्यमिति तत्तु चण्डेश्वरप्रश्नविद्यायामुक्तम् "आदिम लग्नतो ज्ञान चन्द्रस्थानाद् द्वितीयकम् । सूर्यस्थानात्तृतीय स्यात्तुर्यं जीवगृहाद्भवेत् ॥ १ ॥ बुधभृग्वोर्बलीय स्यात्तद्गृहात्पञ्चमं पुन । राश्यनुरूप कथयेदि' ति । सुधीभिरेतत्सर्वं शास्त्रान्तरतोऽपि मृशं विचार्यमिति ।

अधुना शकुननिमित्तं शुभाशुभफलप्रवक्तव्यतामाह ।

**उदयनिमित्तैः प्रश्नीभूतैर्बहिरन्तःस्थितैः शकुनैः ।**
**यद्वक्तव्यं शुभमशुभं, ग्रहस्तत्कालजातं यत् ॥ ५ ॥**

दृच्छनसोः प्रीतिकरं, प्रश्ने भूदर्शनं यदि प्रश्नात् ।
माङ्गल्यद्रव्याणां, भवति शुभं निर्दिशेत्तज्ज्ञः ॥ ६ ॥
हयगजवृषसिंहादेः पृच्छाकाले रुतं यदा भवति ।
दर्शनमथवैतेषां, शुभप्रदं विनिर्दिशेत्प्रश्ने ॥ ७ ॥

**उदयनिमित्तैरिति** । दृच्छनसोरिति । हयगजवृषसिंहादेरिति च । उदयनिमित्ते प्रश्नलग्नकारणे प्रश्नीभूते अप्रश्ना प्रश्ना सम्पद्यमाना भूता इति प्रश्नीभूता ते बहिरन्तःस्थितैर्बाह्याभ्यन्तरस्थितैः शकुनैः शुभलक्षणैः अशुभलक्षणैर्वा प्रष्टुः पृच्छकस्य यत् तत्कालजातं शुभमशुभं तत्सर्वं वक्तव्यं कथितव्यमिति । यदि प्रश्नात् प्रश्ने प्रश्नकाले दृच्छनसोर्दृष्टिचित्तयोः प्रीतिकरं प्रीत्युत्पादकं भूदर्शनं पृथ्व्या दर्शनं भवति अथवा माङ्गल्यद्रव्याणां मङ्गलसूचकद्रव्याणां दर्शनं यदि स्यात्तदा तु तज्ज्ञो दैवज्ञः शुभं निर्दिशेत् कथयेदिति । यदा पृच्छाकाले प्रश्नसमये हयगजवृषसिंहादेः घोटकहस्तिगोसिंहादेः रुतं शब्दः भवति चेत्तदा तु शुभं कथयेत् । एवमुक्तं प्रश्नसिन्धौ "पृच्छायां जलजमृदङ्गवल्लकीनां यद्वा स्याद्ध्वनिरिभहंसगोहयानाम् । कल्याणं ननु निगदन्ति शाकुनज्ञा वाहद्विड्खरबलिभुग्गुतैरनिष्ट"मिति । वाहद्विट् महिषः । अथवेति । तेषां घोटकहस्तिगोसिंहादीनां दर्शनमपि प्रश्ने शुभप्रदं विनिर्दिशेत् कथयेदिति । वराहेण तु तत्पुरीषदर्शनमनिष्टमुक्तं "गजगोशुनां पुरीषं धनसुतसुहृद्विनाशकर"मिति । एवं प्रव्रजितादीनां दर्शनमप्यशुभसूचकमुक्तं च बृहत्संहितायाम् "प्रव्रजितनग्ननापितरिपुबन्धनसौनिकैस्तथाश्वपचैः । कितवयतिपीडितैर्युतमायुधमाद्ध्वीकविक्रयैर्न शुभम् ॥ १ ॥ छिन्नभिन्नकृमिखातकण्टकिशुष्करक्षकुटिलैर्न सत्तुनैः । क्रूरपक्षियुतनिन्द्यनामभिः शुष्कशीर्णबहुपर्णचर्मभिः ॥ २ ॥ श्मशानशून्यायतनं चतुष्पथं तथाऽमनोज्ञं विषमं सदोषरम् । अवस्करागारकपालभस्मभिश्चितं तुषैः शुष्कतृणैर्न शोभन"मिति ॥३॥ प्रश्नभैरवे तु प्रष्टुः स्थितदिशात शुभाशुभमुक्तं "पूर्वस्यां पश्चिमायां यदि वदति नरः प्राश्निकः सिद्धकार्यो याम्यां सौम्याश्रितः सन् यदि वदति नरः प्रस्थितं दूरतः स्यात् । नैर्ऋत्यां रौद्रदेशे यदि वदति तदा दूरतश्चार्थमार्गो वायोरग्नेश्च न स्याद्दिशि वदति तदा विद्धिरारात्त्विनष्ट"मिति । वराहेण तु प्रष्टृस्थितदिशात प्रश्नसमयतोऽपि च शुभाशुभमुक्तं "प्राग्युत्तरैशाश्च दिशः प्रशस्ताः प्रष्टुर्न वाय्वम्बुयमाग्निरक्षः । पूर्वाह्णकालेऽस्ति शुभं न रात्रौ सन्ध्याद्वये प्रश्नकृतोऽपराह्ण" इति ।

इदानीं तु तन्वादिद्वादशभाववशतः शुभाशुभमाह ।

यो यो भावः प्रभुणा, युक्तो दृष्टोऽथवा प्रश्ने ।
गुरुबुधशुक्रैरेवं, वक्तव्यं तस्य तस्य फलम् ॥ ८ ॥
यस्मिन्यस्मिन्भावे, द्विग्रादशसप्तमस्थिताः सौम्याः ।
तस्मिंस्तस्मिन् वृद्धिर्दशमचतुर्थस्थितैस्तद्वत् ॥ ९ ॥

**यो यो भाव इति ।** यस्मिन्यस्मिन्भाव इति च । उक्तं च "तनुर्धनं च भ्राता च सुहृत्पुत्रो रिपुस्तुनौ । निधनं धर्मकर्मायव्यया भावा इमे स्मृता ॥" इति द्वादशभावा उक्ता । "भौमसितौ सौम्यविधू सूर्यबुधौ शुक्रकुजौ । जीवशनी मन्दगुरू राश्यधिपा स्यु क्रियत" इति राशिस्वामिन उक्ता । "क्षीणेन्दुमन्दरविराहुशिखिक्ष्माजा पापास्तु पापयुतचन्द्रसुतश्च पाप । तेषामतीव शुभदौ गुरुदानवेज्यौ क्रूरौ दिवाकरसुतक्षितिजौ भवेताम् ॥ शुक्लादिरात्रिदशकेऽहनि मध्यवीर्यशाली द्वितीयदशकेऽतिशुभप्रदोऽसौ । चन्द्रस्तृतीयदशके बलवर्जितस्तु सौम्येक्षणादिसहितो यदि शोभनः स्या"दिति ग्रहाणां पापशुभत्वमुक्तं । "पादेक्षणं भवति सोदरमानराश्योरर्थं त्रिकोणयुगलेऽखिलखेचराणाम् । पादोनदृष्टिनिचयश्चतुरस्रयुग्मे सम्पूर्णदृग्बलमनङ्गगृहे वदन्ति ॥ शनिरतिबलशाली पाददृग्वीर्ययोगे सुरकुलपतिमन्त्री कोणदृष्टौ शुभ स्यात् । नितयचरणदृष्टा भूकुमार समर्थ सकलगगनवासा सप्तमे दृग्बलाढ्या ॥" इति ग्रहाणा दृष्टिरुक्ता । तेन प्रश्ने प्रश्नसमये य कश्चिद्भावस्तन्वादिक प्रभुणा स्वामिना युक्त दृष्टोऽवलोकितो वा एवमनेन प्रकारेण गुरुबुधशुक्रैर्बृहस्पतिबुधशुक्रैर्युक्तोऽवलोकितो वा तस्य फल शुभमिति शेष । वक्तव्य कथितव्यमिति । एव पृथुयशा अप्याह । "यो यो भाव स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्यतस्यास्ति वृद्धि"रिति । ये ये भावा पापग्रहैर्दृष्टा युक्ता वा तत्र तु पूर्वाचार्यैस्तज्जन्यपदार्थाना हानिरुक्ता "पापैरेव तस्य भावस्य हानिर्निर्देष्टव्या पृच्छता जन्मतो वे"ति । यस्मिन्यस्मिन्निति । यस्मिन् यस्मिन् भावे तन्वादिके भावकुण्डल्यां वा सौम्या शुभग्रहा द्विद्वादशसप्तमस्थिता द्वितीयद्वादशसप्तमस्थानस्थिता तस्मिन् तस्मिन् । भाव इति शेष । वृद्धिरुपचय स्यात् दशमचतुर्थस्थिते । सौम्यैरिति शेष । तद्वद्वृद्धि स्यादिति भाव । नन्वत्राचार्येण द्वादशस्थानस्थित शुभग्रह शुभ इत्युक्त । तत्तु कथम् । अत्र किंचित्प्रमाणमस्ति न वा । षट्पञ्चाशिकाया स्वकृतटीकाया तेन निजदत्तप्रमाणादपि द्वादशस्थ शुभग्रह अशुभ इत्युक्त तत्र । "पुष्णन्ति शुभाभावास्तन्वादीन् घ्नन्ति सस्थिता पापा । सौम्या षष्ठेऽरिघ्ना सर्वे नेष्टा व्ययाष्टमगा" इति । इह तु केवल वासवानन्दस्य सम्मतिराचार्यसम्मतिरिवास्ति सा च तेन निजकृतप्रश्नसिन्धावुक्ता "यस्माद्वा व्ययधनकामगा शुभाख्यास्तद्वृद्धि खल्वखचरैस्तदीयबाधे"ति । वैद्यनाथेन तु जातकपारिजाते भावाना बहुप्रकारविचाराद्युक्त तत्तु मयाऽत्र सगृहीतम् "ये ये भावा सितशशिमरुद्गुरुपतिभि सयुता वीक्षिता वा नान्यैर्दृष्टा न युक्ता यदि शुभफलदा मूर्तिभावादिकेषु ॥ तन्वादिभावेषु शुभोदयेषु तद्भावनाथोपगतेक्षितेषु । तदुक्तभावस्य समृद्धिरुक्ता न पापखेटेक्षितसयुतेषु ॥ नीचस्थो रिपुराशिस्थ खेटो भावविनाशक । मूलस्वतुङ्गमित्रस्थो भाववृद्धिकरो भवेत् ॥ यद्भावनाथो रिपुरिःफरन्ध्रे दुःस्थानपो यद्भवनस्थितस्तु । तद्भावनाश कथयन्ति तज्ज्ञा शुभेक्षितश्चेत्फलमन्यथा स्यात् ॥ यद्भावपे केन्द्रगते विलग्नात्त्रिकोणगे वा यदि सौम्यदृष्टे । तुङ्गादिवर्गोपगते बलाढ्ये तद्भावपुष्टिं फलमाहुरार्या ॥ तत्तद्भावत्रिकोणे सुखमदन-

गृहे वाहपदे सौम्ययुक्ते पापानां दृष्टिहीने भवनपसहिते पापखेटैरयुक्ते । भावानां पुष्टिमाहु सकलशुभकरं चान्यथा चेत्प्रणाशं मिश्रं मिश्रग्रहेन्द्रैरखिलमपि तथा मूर्तिभावादिकानाम् ॥ नाशस्थानगतो दिवाकरकरच्छन्नस्तु यद्भाविपो नीचारातिगतोऽथवा यदि शुभे खेटैरयुक्तेक्षित. । तद्भावस्य विनाशनं मुनिगणा शंसन्ति खेटैर्युतो यत्राधिप फलप्रदो नहि तदा मूलादिभाना क्रमात् ॥ दु स्थाने वारिगे मूढे दुर्बले भावनायके । भावस्य सम्पदं कर्तुं न शक्ता भावगाश्रित ॥ दुःस्थितो वापि यदा नभोग पापारिनीचाशकसयुतो य । स्वतुङ्गमित्राशकराशियुक्त शुभेक्षितो वा यदि शोभन स्यात् ॥ भावे शाकान्तराशीशे दु स्थे भावस्य दुर्बले । स्वोचमित्रस्वराशिस्थे भावपुष्टिं वदेद्बुध ॥ यद्भावलाभधनविक्रमराशियाता यद्भावनाथसुहृदुच्चतदुच्चनाथा । तद्भावपुष्टिबलमम्बरचारिणस्ते कुर्वन्ति मूढरिपुनीचविवर्जिताश्चेत् ॥ भावाशतुल्य खलु वर्तमानो भावोद्भवं पूर्णफलं विधत्ते । भावोनके चाप्यधिके च खेटे त्रैराशिकेनाऽन्न फलं विचार्यम् ॥ "सौम्यवर्गाश्रिता भावा शुभता प्राप्नुवन्ति हि । पापवर्गाधिका नेष्टास्त्वाद्या नात्र सशय " इति । अन्ये प्राचीना आचार्या अपि एतादृशं वदन्ति । आचार्यवासवानन्दयोरेका सम्मति । कारणमत्राऽऽचार्यजन्मसमयतो बहुकालेऽतीते वासवानन्दस्य जन्माऽऽसीत्, तेन तत्कृतशास्त्रमधीतं तस्मात्तस्यापि सैव सम्मतिरिति मन्मतम् । अथ च प्रश्नतंत्रे भुवनदीपके च द्वादशभावाना निरीक्षणविधि सम्यगुक्तस्तेन स च मयात्र सगृहीत । "सौख्यमायुर्वयो जातिरारोग्यं लक्षणं गुणम् । क्लेशाकृती रूपवर्णस्तनोश्चिन्त्यं विचक्षणै ॥ मुक्ताफल च माणिक्य रत्न धातुधनाम्बरम् । क्रयकार्यार्थविज्ञानं वित्तस्थानाद्विलोकयेत् ॥ भगिनीभ्रातृभृत्याना दासकर्मकृतामपि । दुश्चिक्य वीक्षण विद्वान् सम्यग् दुश्चिक्यवेश्मत ॥ वाटिका स्थलक्षेत्र महौषधिनिधीनपि । विवरादिप्रवेश च पश्येत्पातालतो बुध ॥ गर्भापत्यविनेयाना मन्त्रसाधनयोरपि । विद्याबुद्धिप्रबन्धाना सुतस्थाने विनिर्णय ॥ चौरभीरिपुसग्रामशरोद्भक्रूरकर्मणाम् । मातुलातकभृत्याना रिपुस्थानाद्विनिर्णय ॥ वाणिज्यं व्यवहार च विवादं च समं परै । गमागमकलत्राणि पश्येत्प्राज्ञ कलत्रत. ॥ नद्युत्तारेऽध्ववैषम्ये दुर्गे शानवसकटे । नष्टे दुष्टे रणे व्याधौ छिद्रे छिद्र निरीक्षयेत् ॥ वापीकूपतडागादिप्रपादेवगृहाणि च । दीक्षा यात्रा मठं धर्मं धर्माद्विचिन्त्य कीर्तयेत् ॥ राज्यं मुद्रा पर पुण्यं स्थानं तातं प्रयोजनम् । वृष्ट्यादिव्योमवृत्तान्तं व्योमस्थानान्निरीक्षयेत् ॥ गजाश्वयानवस्त्राणि सस्यकाचनकन्यका । विद्वान् विचार्ययोर्लाभं लक्षयेल्लाभलग्नत ॥ त्यागभोगविवादेषु दानेऽष्कृषिकर्मसु । व्ययस्थानेषु सर्वेषु विद्धि विद्वान् व्यय व्यया" इति ॥

अधुना लग्नगतो द्विपदादिराशि सदसद्वर्गैर्युतस्तस्माच्छुभाशुभमाह ।

**द्विपदं चतुष्पदं वा, भवनं लग्नोपगं ग्रहः पापः ।**
**पश्यति तदाशकरो, ज्ञेयः सौम्यो विवृद्धिकरः ॥ १० ॥**

**द्विपदमिति** । पापो ग्रह पापग्रह लग्नोपग लग्नगत द्विपदं मिथुनकन्यातुल-कुम्भाधनुष पूर्वार्धं च । चतुष्पद मेषवृषसिंहा मकरस्याद्यभागो धनुष परभागश्च । भवन राशि पश्यति चेत्तदा तु तथाशकर तस्य भावस्य नाशकारक तज्जन्य-पदार्थाना नाश करोतीति भाव । सौम्य शुभग्रह विवृद्धिकर विशेषरूपेण वृद्धिरुप चयकारको ज्ञेयो बोध्य । तद्भावजन्यपदार्थानामिति शेष । राशीना द्विपदादिसंज्ञा जातकपारिजात उक्ता च । "चापापरार्धहरिगोमकरादिमेषा मानस्थिता बलयुताश्च चतु ष्पदाख्या । कन्यायुग्मघटतौलिशरासनाद्या लग्नान्विता यदि नरा द्विपदा बलाढ्या ॥ मृगापरार्धान्त्यकुलीरसंज्ञा जलाभिधाना बलिनश्चतुर्थे । जलाश्रयो वृश्चिकनामधेय स सप्तमस्थानगतो बली स्या" दिति ॥

अधुना लग्नेशादिग्रहाणा केन्द्रादिस्थानोपगतत्वाच्छुभाशुभमाह ।

**लग्नाधिपतिः केन्द्रे, तन्मित्रं वा व्ययाष्टकेन्द्रेभ्य. ।**
**अन्यत्र गताः पापास्तत्रापि शुभं वदेत्प्रश्ने ॥ ११ ॥**
**पञ्चमनवमोपगतैर्बुधगुरुशुक्रैर्यथेप्सितावाप्तिः ।**
**षट्त्रिलाभोपगतैः, क्षितिसुतरविसूर्यजैस्तद्वत् ॥ १२ ॥**
**पापैर्लग्नोपगतै', शरीरपीडां विनिर्दिशेत्कलहम् ।**
**सुखसंस्थैः सुखनाशं, गृहभेदं बन्धुविरोधं वदेत् ॥ १३ ॥**
**अस्ते गमनविरोधः, कर्मस्थे कर्मणा नाशः ।**
**शुभदृष्टेः संयोगात्प्रभुः कृच्छ्राद्वदेत्सिद्धिम् ॥ १४ ॥**

**लग्नाधिपतिरिति** । पञ्चमनवमेति । पापैरिति । अस्त इति च । प्रश्ने प्रश्नसमये लग्नाधिपति प्रश्नलग्नपति केन्द्रे लग्नचतुर्थसप्तमदशमानामन्यतमे स्थित । "अथ च केन्द्रचतुष्टयकण्टक तनुसुखाम्बरसप्तमभ स्मृत"मिति परिभाषा । अथवेति । तन्मित्र तस्य प्रश्नलग्नपतेर्मित्र सुहृत् । केन्द्रे स्थितमिति शेष । मित्रामित्रमाह वैद्यनाथ "मित्राणि भानो कुजचन्द्रजीवा शत्रू सितार्की शशिज समान । चन्द्रस्य मित्रे दिननायकज्ञौ समा गुरुक्ष्मासुतसिताऽसिता स्यु ॥ आरस्य मित्राणि रवीन्दुजीवाश्चान्द्री रिपु शुक्रशनी समानौ । सूर्यासुरेज्यौ सुहृदौ बुधस्य समा शनीज्यावनिजास्त्वरीन्दु ॥ सूर्यारचन्द्रा सुहृदस्तु सूरे शत्रू सितज्ञौ रविज समान । मित्रे शनिज्ञौ भृगुनन्दनस्येन्द्विनावरी जीव कुजौ समानौ ॥ मन्दस्य सूर्येन्दुकुजाश्च शत्रव सम सुरेज्य सुहृदौ सितेन्दुजाविति ।" पापा इति । पापा क्षीणचन्द्रसूर्यमङ्गलसपापबुधशनिराहुकेतव व्ययाष्टकेन्द्रेभ्य द्वादशाष्टमलग्नचतुर्थसप्तमदशमेभ्योऽन्यत्र गता अन्यस्थानस्थिता । द्वितीयतृतीय पञ्चमषष्ठनवमैकादशस्थानेषु स्थिता इति भाव । तत्रापि शुभं वदेत् कथयेत् । दैवज्ञ इति शेष । बुधगुरुशुक्रै पञ्चमनवमोपगतै पञ्चमनवमस्थानस्थितै यथे प्साप्ति स्यात् । प्रष्टुरिति शेष । क्षितिसुतरविसूर्यजैर्मङ्गलसूर्य-

शनिभि पद्भिलाभोपगते षष्ठतृतीयैकादशस्थानस्थिते तद्वद् यथेष्टप्राप्ति स्यात् । लग्नोपगते पापे क्षीणचन्द्रसूर्यमगलसपापबुधशनिराहुकेतुभि शरीरपीडा कलह च विनिर्दिशेत् कथयेत् । दैवज्ञ इति शेष । सुखसस्थे चतुर्थस्थानस्थिते । पापग्रहै रिति शेष । सुखनाश गृहभेद बन्धुविरोध च वदेत् कथयेत् इति । श्रीसिद्धनारायणदासेन तु प्रश्नवैष्णवे बहुना प्रकारेण शुभाशुभमुक्त तच्चेद "सौम्यैर्ग्रहैर्नवमपञ्चमकण्टकस्थै पापैस्तथाष्टमचतुष्टयवर्जितैश्च । सर्वार्थकार्यसुखसिद्धिरभीष्टलाभो व्यस्त भवेत्सकलमेव विपर्ययेण ॥ शीतांशुशुक्रसुरार्चितानामेको निजोच्च भवन प्रपश्येत् । लग्ने तदा स्थानसुखार्थलाभात् समुन्नतिं चाशु समेति मर्त्य ॥ गुरौ विलग्ने तपनेऽम्बरस्थे प्रष्टा पुमान् सौख्यजयौ च लाभम् । राज्य सुपुष्टिं क्षितिवस्त्रपानभोज्यान्पदार्थांल्लभतेऽनुरूपान् ॥ युग्मे सितेज्यौ शशिनो विलग्ने मेषूरणे भूमिसुतो यदा स्यात् । प्रष्टा पुमान् वित्तजयौ च राज्य स्थितिं च सौख्य लभते तदानीम् ॥ सिंहोदये यदा लग्ने स्वोच्चस्थोऽन्यान् शुभग्रहान् । पश्येत् प्रष्टा सुख वित्त राज्य वृद्धि समाप्नुयात् ॥ मित्रेक्षितो मित्रगृहे विलग्ने शुभग्रहश्चा शु करोति पुसाम् । सुकार्यसिद्धिं विजय समृद्धिं नष्टार्थलाभ परमा च मैत्रीम् ॥ लग्ने गुरौ स्थानसुखाम्बरार्थलाभ सुविद्यार्थसुताभिरिन्दुजे । शुक्रे विलग्नेऽर्थसुखास्पदाप्ति सूर्ये भय कार्यविनाशरुग्भयम् ॥ लग्नस्थित भूमिजमर्कपुत्र पश्येद्यदा शत्रुदशा तदा स्यात् । चौराग्निभय राजभय विपत्ति स्त्रीभि कलिर्वाग्निभयाभिघात ॥ मन्दे विलग्नेऽशुभेनेन्दु दृष्टे विरोधकार्यार्थविनाशरोगा । राहौ विलग्ने शशिसूर्यभौमैर्दृष्टेऽभिघात कलहो भय स्यात् ॥ लग्ने व्यये रन्ध्रगृहे शशाङ्क पूर्णोऽप्यनिष्टो धनकार्यविभङ्कृत् । बुधे विलग्ने शशिपापदृष्टेऽर्थाप्तिस्त्वनर्थश्च भवेदसशयम् ॥ सर्पाभिशस्त्रायसिंहोदयस्थ द्रेष्काणमर्योऽथ सुत प्रपश्येत् । मध्याह्नकाले त्वनलाद्भय स्याच्चन्द्रेऽष्टमस्थेऽत्र गदो विनश्येत् ॥ क्रूर ग्रहा द्वादशधामसस्था सर्वेऽथवा लाभगता बलाढ्या । विलग्नजामित्रविनाशगा वा सर्वार्थकार्यास्पदनाशदा स्यु ॥ लग्नस्थित शीतकर प्रपश्येत्पापो नभ स्थो मदनस्थितो वा । प्रष्टुस्तदा स्थानसुखार्थनाशो रोगोऽथवा मृत्युभयाभिघात ॥ लग्नास्तधर्महिबुका स्मजरन्ध्रकर्मबुधिक्षयगा यदयुता अशुभग्रहेन्द्रा । कार्याभिघातमशुभ सुखवित्तनाश कुर्युर्विरोधकलह परिपृच्छकानाम् ॥ लग्नाष्टवित्तात्मजकण्टकस्था पापा न सौम्यै सहितेक्षिता स्यु । कार्याभिघात जयवित्तनाश नष्टार्थनाश च भय प्रकुर्यु ॥ लग्ने गुरौ स्थानसुखार्थ लाभो बुधश्च विद्याधनधीसुखाप्ति । शुक्रश्च लग्ने शुभकार्यसिद्धि स्त्रीभोगसौख्यास्पद वित्तलब्धि ॥ नीचस्थिता अस्तमिताश्च पापा युक्तास्तथा शत्रुजिता विरश्मा । बलेन हीनास्त्रवणवश्च न स्यु स्वकर्मकर्तुं खचरा समर्था" इति ॥ अस्ते गमनविरोध इति । अस्ते सप्तमस्थाने पापग्रह इति शेष । गमनविरोधो गमनस्य विरोध स्यात् । कर्मस्थे दशमस्थानस्थिते कर्मणां अनुष्ठानजपादिशुभकर्मणा नाशो विसव स्यात् । शुभदृष्टे शुभग्रहावलोकनत सयोगाद् युक्तत्वाच्च तै प्रष्टु प्रश्नकर्तु कृच्छ्रात् कष्टत सिद्धि अभीष्टकार्यसिद्धि लभेत् इति वदेत् कथयेत् । दैवज्ञ इति शेष । भुवनदीपके तु श्रीपद्मप्रभुसूरिणा

लग्नेशकार्येशात् शुभाशुभ एकपादादियोगाश्च कथ्यन्ते "भावोऽथ कार्यरूपो यस्तदधिप लग्नाधिपौ चिन्त्यौ । वीक्षणयोगौ भावाधिष्ठातारौ पुनश्चिन्त्यौ ॥ लग्नपतिर्यदि लग्न कार्याधिपतिश्च वीक्षते कार्यम् । लग्नाधीश कार्यं कार्येश पश्यति विलग्नम् ॥ लग्नेश कार्येशौ त्रिगोक्ते लग्नं नु कार्येश । शीतगुदृष्टौ सत्या परिपूर्णा कार्यनिष्पत्ति ॥ कथय न्ति पादयोग पश्यति सौम्यो न लग्नपो लग्नम् । लग्नाधिपश्च पश्यति शुभग्रहो नार्धयोगे च ॥ एक शुभग्रहो यदि पश्यति लग्नाधिपो विलोकयति ॥ पादोनयोगमाहुर्मदा बुधा कार्यसंसिद्धौ ॥ लग्नपतिदर्शने सति शुभग्रहौ द्वौ त्रयोऽथ वा लग्नम् । पश्यन्ति यदि तदानीमाहुर्योग त्रिभागोनम् ॥ क्रूरग्रहेक्षणवर्ज्याश्चत्वार सौम्यखेचरा लग्नम् । लग्नेशदर्शने सति पश्यन्ति च पूर्णयोगकरा ॥ क्रूराक्रान्त क्रूरयुत क्रूरदृष्टस्तु यो ग्रह । विरश्मिता प्रपन्नश्च स विनष्टो बुधै स्मृत ॥ क्रूरेण जीयमानो यो राहुपार्श्वे यथा रवि । क्रूराक्रान्त स विज्ञेय क्रूरयुक्त समेंऽशके ॥ पूर्णया दृश्यते दृष्ट्या क्रूरदृष्ट स उच्यते । प्रविविक्षु प्रविष्टो वा सूर्यराशौ विरश्मिक ॥ लग्नाधिपे विनष्टे स्याद्विनष्टावयव पुमान् । विनष्टजातिवर्णश्च शुभाशुभविपर्यये' इति ॥

इदानीं स्थानप्राप्तिगमनागमनरोगोपशमनद्रव्यनाशपराभवज्ञानमाह ।

स्थिरराशौ लग्नगते, स्थानप्राप्तिं वदेन्न गमनं च ।
रोगोपशमं नाशं, द्रव्याणां च पराभवं नाऽत्र ॥ १७ ॥
चरराशौ विपरीतं, मिश्रं वाच्यं द्विमूर्त्युदये ।
स्थिरवत्प्रथमेऽर्धे, स्यादपरे चरराशिवत्सर्वम् ॥ १८ ॥

**स्थिरराशाविति** । चरराशाविति च । स्थिरराशौ वृषसिंहवृश्चिककुम्भानामन्यतमे राशौ लग्नगते सति तदा तु प्रष्टु स्थानप्राप्तिं अभीप्सितस्थानस्य प्राप्तिं लाभं वदेत् कथयेत् गमनं च न कथयेत् । दैवज्ञ इति शेष । "मेषतश्चरस्थिरद्व्यङ्गानि स्यु"रित्यभिधानात् । अत्र रोगोपशमं रोगाणां शान्तिं द्रव्याणां धनानां नाशं पराभवं पराजयं च न स्यात् । चरराशौ मेषकर्कतुलामकराणामन्यतमे राशौ । लग्नगते इति शेष । विपरीतं उक्तप्रकाराद्विपरीतं वाच्यं वक्तव्यं । स्थानप्राप्तिर्न स्यात् । गमनं रोगशमनं द्रव्यनाशं पराभवं च भवेदिति भाव । द्विमूर्त्युदये मिथुनकन्याधनुर्मीनानामन्यतमे राशौ लग्नगते मिश्रं मिश्रफलं वाच्यं वक्तव्यम् । कीदृशं मिश्रफलं वाच्यमित्याशङ्क्याह । स्थिरवदिति । प्रथमेऽर्धे पूर्वार्धे स्थिरवत् स्थिरराशिसदृशफलं वक्तव्यं अपरे परार्धे सर्वं चरराशिवत् चरराशिसदृशं फलं वाच्यमिति । द्विस्वभावलग्नस्य शून्यांशमारभ्य चतुर्दशांशपर्यन्ते स्थानप्राप्तिः स्यात् गमनरोगशान्तिद्रव्यनाशपराभवादि न स्यात् पञ्चदशांशमारभ्यैकोनत्रिंशदंशपर्यन्ते स्थानप्राप्तिर्न स्यात् गमनरोगशान्तिद्रव्यनाशपराभवादि स्यादिति भाव । एवं पृथुयशा अप्याह । 'वृषसिंहवृश्चिकघटैर्विद्धि स्थानं गमागमौ न स्त । न मृतं न चापि नष्टं न रोगशान्तिर्नचाभिभव ॥ तद्विपरीतं तु चरैर्द्विशरीरैर्मिश्रितं फलं भवति । लग्ने द्रेष्काणे शुभदृष्टे शोभनमतोऽन्यत् ॥"

इति। श्रीसिद्धनारायणदासेन तु चरराश्यादीना पृथक् पृथक् फलमुक्त तद्य। "द्यगोदयैर्हृतधनादिरभीष्टवस्तुप्राप्तिस्थिरेण गमनागमबन्धमोक्षा। प्रभुर्भवन्ति परचक्र मुपैति वीर्यं रोगी च जीवति बलि च हिनोति भूप। स्थिरोदये चन्द्रमसि स्थिरस्थे द्यगे हिमांशौ द्वितनूदयेऽपि। चरोदये शीतकरे चरे तथा फल विशेषात्प्रथमोदित भवे"दिति।

अधुना लग्नगतशुभवर्गादिवशतो लाभादौ शुभाशुभज्ञानमाह।

शुभग्रहे लग्नगते, लग्ने वा सौम्यवर्गमायाते।
ब्रूयादभिमतसिद्धिं, प्रष्टुस्स्थानान्तरप्राप्तिम् ॥ १७ ॥

**शुभग्रह इति**। शुभग्रहे पूर्णचन्द्रनिष्पापबुधबृहस्पतिशुक्रा तेषामन्यतमे ग्रहे लग्नगते सति अथवा सौम्यवर्गं शुभग्रहाणां राशिं लग्ने आयाते प्राप्ते तदा प्रष्टु अभिमतसिद्धिं अभीष्टकार्यस्य सिद्धिं स्थानान्तरप्राप्तिं च अन्यत्स्थान स्थानान्तरं तस्य प्राप्तिस्ता च ब्रूयात् कथयेत्। दैवज्ञ इति शेष। एव पद्मप्राशिकायामप्युक्त च "सौम्ये विलग्ने यदि वास्य वर्गं शीर्षोदये सिद्धिमुपैति कार्यम्। अतो विपर्यस्तमसिद्धि हेतु कृच्छ्रेण तत्सिद्धिकरं विमिश्र"मिति।

अधुना केन्द्रत्रिकोणगतशुभग्रहतत्र्यादिगताशुभग्रहतश्च शुभफलमाह।

केन्द्रत्रिकोणसंस्थाः, सौम्याः पापास्त्रिषष्ठलाभेषु।
संस्थाः सिद्धिं ब्रूयात्कार्याणां प्रोषितागमनम् ॥ १८ ॥

**केन्द्रत्रिकोणेति**। सौम्या शुभग्रहा केन्द्रत्रिकोणसस्था लग्नचतुर्थपञ्चमसप्तम नवमदशमस्थानस्थिता पापा अशुभग्रहास्त्रिषष्ठलाभेषु तृतीयषष्ठैकादशस्थानेषु सस्था सस्थिता चेत्तदा कार्याणां सिद्धिं प्रोषितागमन च प्रवासिनामागमन ब्रूयात् कथयेत्। दैवज्ञ इति शेष। एवमाह नीलकण्ठ 'पापे षष्ठत्रिलाभस्थे कण्टकस्थे शुभग्रहे। प्रवासी पुनरायाति दूरस्थोऽपि सुनिश्चित"मिति।

अधुना परदेशगतस्यागमानागमज्ञानमाह।

दुश्चिक्यधनसमेतौ, गुरुशुक्रावागमं नृणाम्।
बन्धूपगतावेतौ, गृहप्रवेशं क्षणात्कुरुतः ॥ १९ ॥
लग्नाद् द्विद्वादशगौ, चन्द्राद्वा चन्द्रपुत्रभृगुपुत्रौ।
मरणं लघ्वागमनं, नास्तीति विनिर्दिशेत्प्रष्टुः ॥ २० ॥

**दुश्चिक्येति**। लग्नादिति च। गुरुशुक्रौ दुश्चिक्यधनसमेतौ तृतीयद्वितीयस्थान स्थितौ चेत्तदा नृणां प्रवासिपुरुषाणा आगम स्वगृहागमन कुरुत। अथवैतौ बृहस्पतिशुक्रौ बन्धूपगतौ चतुर्थस्थानस्थितौ क्षणात् त्रिंशत्पलात्मकात्। "तास्तु त्रिंशत्क्षणस्तेलि"त्य भिधानात्। अर्थादल्पकालादिति भाव। गृहप्रवेश गृहागमन कुरुत। प्रवासिनामिति शेष। प्रश्नभूषणेऽप्येवमुक्त "गुरुशुक्रौ द्वितीये वा तृतीये प्रश्नलग्नत। तदा गृहागत

विद्यात्पथिकं नात्र संशयः ॥ जीवो वा भार्गवो वापि चन्द्रो वा सुखवेश्मनि । पथिकं गृहमायान्तं जानीयात्प्रश्नवित्तदा ॥" लग्नादिति । लग्नात् चन्द्राद्वा चन्द्रस्थितराशितो वा चन्द्रपुत्रभृगुपुत्रौ बुधशुक्रौ द्विद्वादशगौ द्वितीयद्वादशस्थानस्थितौ चेत्तदा प्रवासिनो मरणमपि नास्ति लघ्वागमनं च लघुनाल्पकालेनागमनं च नास्तीति न भवेदिति प्रष्टुर्विनिर्दिशेत् कथयेत् । दैवज्ञ इति शेषः । प्रश्नसिन्धौ त्वयं योगः सान्तरः फलान्तरकर्ता चोक्तः "लग्नस्य पार्श्वोपगतौ विधोर्वा स्मरस्य वा सौम्यखगौ खलौ वा । एकत्रयोगेऽपि गतौ न चेति प्रस्थातुकामो न खलु प्रयाती"ति । आगमनानागमनज्ञानं तु नीलकण्ठ्यां विशेषतयोक्तं च । "शुभः षष्ठेऽथ जामित्रे वाक्पतिः कण्टके स्थितः । पथिकागमनं ब्रूते स्थिते हे वा त्रिकोणगे ॥ षष्टोदये पापदृष्टे शुभदृग्वर्जिते बुधः । लग्नात्षष्ठे यदा पापा यातुश्च निधनं वदेत् ॥ यदा क्रूरास्तृतीयस्था देशाद्देशान्तरं गतः । चौरैणैव हृतस्वश्च पथिकः केन्द्रगा यदि ॥ चतुरस्रे त्रिकोणे वा पापगेहस्थित शनिः । पापदृष्टिश्च नियतं बन्धनं यातुरादिशेत् ॥ शुभयुक्ते स्थिरे लग्ने स्थिरो बद्धश्चरेऽन्यथा । द्वितनौ सौम्यसंयुक्ते बन्धमोक्षौ क्रमेण तु ॥ पापरस्त्रिकोणजामित्रे विलग्ने पृष्ठकोदये । शत्रुभिर्वीक्षमाणश्च यातुः कष्टं वदेत्सुधी. ॥ मार्गस्थानगतै. सौम्यैर्मार्गे तस्य शुभं वदेत् । क्रूरैर्दुःखं विलग्नस्थे पापे क्लेशमवाप्नुयात् ॥ चरलग्ने चरांशे वा चतुर्थे चन्द्रमाः स्थितः । प्रवासी सुखमायाति कृतकार्यश्च वेश्मनि ॥ कण्टकैः सौम्यसंयुक्तैः पापग्रहविवर्जितैः । प्रवासी सुखमायाति निधनस्थे निशाकरे ॥ गमागमौ तु न स्यातां योगे दुरुधराकृते । शुभैः शुभकृतो रोध पापैस्तस्करतो भयम् ॥ इन्दु सप्तमगो लग्नात्पथिकं पश्चि मार्गगम् । मार्गाधिपश्च रास्यर्धात्परभागे व्यवस्थित. ॥ शुक्रार्कजीवसौम्यानामेकोऽपि स्याद्यदायगः । तदाशु गमनं ब्रूते प्रष्टुर्न गमनं व्यये ॥ लग्नाद्यावतिथे स्थाने बली खेटो व्यवस्थितः । ब्रूयात्तावतिथे मासे पथिकस्य निवर्तनम् ॥ एवं कालं चरांशस्थे द्विगुणं च स्थिरांशके । द्विस्वभावांशगे खेटे त्रिगुणं चिन्तयेत्सुधी ॥ यातुर्विलग्नाज्जामित्रभवनाधिपतिर्यदा । करोति वक्रमाशु तं कालं तं ब्रुवते परे ॥ चतुर्थे दशमे वापि यदि सौम्यग्रहो भवेत् । तदा न गमनं क्रूरैस्तत्रस्थैर्गमनं भवेत् ॥ लग्नाद्वा लग्नाथाद्वा यावन्तः सौम्यखेचराः । मार्गे तन्नोदया वाच्या· स्थाने स्थाने विचक्षणैः ॥ क्रूरयुक्तेक्षितो मन्दः शुभदृग्योगवर्जित. । धर्मस्थस्तनुते व्याधिं प्रोषितस्याथवा मृतिम् ॥ जामित्रस्थ शुभोत्थे याता नायाति दुरुधरायोगे । मित्रस्वामिनिषेधात्पापोत्थे शत्रुरुक् चौरान् ॥ चन्द्रार्कयोर्द्विरगयोर्यमेन संदृष्टयो स्यात्पथि शस्त्रभीतिः । रन्ध्रे स्थिते हे च सुखास्तिरारे मन्दे भयं पापयुगीक्षितेऽध्वनि ॥ सौम्यैः षष्ठान्त्यरन्ध्रस्थैर्विबलैश्च शुभेक्षितैः । पापयुक्तौ शशाङ्कार्कौ तदा दूरस्थितो मृत. ॥ पृष्ठोदये पापयुते त्रिकोणकेन्द्राष्टमस्थोपगतेश्च पापैः । सौम्यैरदृष्टे परदेशसंस्थो मृतो गदार्तो नवमे च सूर्ये" इति ॥

अधुना शत्रोरागमनानागमनज्ञानमाह ।

**स्थिरराशिस्थे चन्द्रे, चरलग्ने तच्चरांशके शीघ्रम् ।**
**आयाति रिपुः सबलो, विपर्यये त्वन्यथा वाच्यम् ॥ २१ ॥**

द्विशरीरे हिमरश्मावुदयगते स्थिरगृहे क्षणाच्छत्रुः ।
लब्धबलोऽपि विनश्यति, गुरुबुधसितसंयुते षष्ठे ॥ २२ ॥
पापैः सुतशत्रुगतैः, शत्रुर्मार्गान्निवर्तते ऽवश्यम् ।
संप्राप्तोऽपि चतुर्थे, वाप्येव निवर्तते भग्नः ॥ २३ ॥

**स्थिरराशिस्थ इति** । द्विशरीर इति । पापैरिति च । चन्द्रे स्थिरराशिस्थे वृष-सिंहवृश्चिककुम्भराशीनामन्यतमे स्थिते सति चरलग्ने मेषकर्कतुलामकरलग्नानामन्यतमे लग्ने तन्नवांशके च चरराशिनवांशके च चेत्तदा सबलो बलेन सहितः सबलः रिपुः शत्रुः शीघ्रं आयाति आगच्छति । विपर्यये तु उक्तप्रकाराद्विपरीते अन्यथा विपरीतं वाच्यं कथितव्यम् । अर्थाच्छत्रोरागमनं न स्यादिति भावः । हिमरश्मौ चन्द्रमसि द्विशरीरे द्विस्वभावराशौ । स्थिते इति शेषः । स्थिरगृहे स्थिरराशौ उदयगते लग्नगते सति तदा लब्धबलः लब्धं प्राप्तं बलं येन तथोक्तः सः प्राप्तबलः शत्रुरपि क्षणादल्पकालाद् विनश्यति । नाशं प्राप्नोतीति भावः । गुरुबुधसितसंयुते बृहस्पतिबुधशुक्रैः संयुते-स्मिन् षष्ठे पापैः रविभौमसपापबुधशनिराहुकेतुक्षीणचन्द्रैः सुतशत्रुगतैः पञ्चमषष्ठगतैः-स्तदा शत्रुः रिपुः अवश्यं मार्गात् पथः निवर्तते । पराङ्मुखो भवतीति भावः । चतुर्थे लग्नाच्चतुर्थस्थाने । पापग्रहाः स्थिता इति शेषः । संप्राप्तोऽपि निकटस्थोऽपि शत्रुः रिपुः आशु शीघ्रमेव भग्नः पराजितो निवर्तते प्रतीपं गच्छतीति । एवं पृथुयशा अप्याह । "स्थिरे शशी चरोदये न चागमो रिपोर्यदा । तदागमं रिपोर्वदेद्विपर्यये विपर्ययम् ॥ स्थिरे तु लग्नमागते द्विरात्मके तु चन्द्रमा । निवर्तते रिपुस्तदा सुदूरमागतोऽपि सः" इति ॥ प्रश्नप्रदीपे तु विशेषतयोक्तं च "धर्मेलग्नाष्टमेशाः स्युः स्थिरे नायाति शत्रवः । स्थिरे ग्रहे स्थिरे लग्ने दृष्टशनोश्च नागमः ॥ लग्नधर्मेश्वरौ युक्तौ दृष्टावथ परस्परम् । तदागमो रिपोर्न स्यादन्यथा त्वन्यथा वदेत् ॥ शनिशुक्रबुधार्काणां यथोक्तोऽपि चरोदये । तदा रिपोरागमः स्यात् स्थिरे लग्ने न चागमः ॥ शत्रोर्निवृत्तिः पृच्छायां लग्ने क्रूरो यदा ग्रहः । पथि शत्रोस्तदा मृत्युर्दैवयोगेन जायते ॥ सुते शनौ स्थिते पापा निवृत्तिं कारयेद्‍रे । पराजितः रिपुः पापे हियुक्स्थो निवर्तते" इति ॥

इदानीं जयपराजयं सन्धिज्ञानं चाह ।

कर्कटवृश्चिकघटधर, मीना हिबुकोपगाः शुभैर्दृष्टाः ।
शत्रोः पराजयकरा, वृषाजपापैः प्रयाति रिपुः ॥ २४ ॥
नवमाद्ये चक्रदले, विज्ञेया यायिनस्तृतीयाद्यं ।
पौराः शुभसंयुक्ते, भाग्ये विजयोऽपरे भङ्गः ॥ २५ ॥
सौम्यैर्नरराशिगतैर्लग्ने लाभे व्ययेऽथवा सन्धिः ।
भवति नृपाणां प्रवदे, दतोऽन्यथा विपर्ययो ज्ञेयः ॥ २६ ॥

**कर्कटवृश्चिकेति** । नवमाद्य इति । सौम्यैरिति च । कर्कटवृश्चिकौ प्रसिद्धौ घट-धरः कुम्भः मीनः प्रसिद्धः एते हिबुकोपगा लग्नाच्चतुर्थस्थाने स्थिता शुभैः पूर्णचन्द्र-

निष्पापबुधगुरशुक्रास्तैर्दृष्टा तदा शत्रो रिपो पराजयकरा पराभवप्रदा भवन्ति । धृया जपार्थे वृषमेषौ राशी पापा पापमहाख्ये । चतुर्थस्थानस्थितैरिति शेष । रिपु शत्रु प्रयाति आयाति । नवमाद इति । नवमाथे प्रश्नलग्नाद्यवम स्थान तस्मात् चक्रदले यद्राशिषट्क तस्मिन् अर्थान्नवमभावाद् द्वितीय स्थान यावत् तावद्यायिनो विज्ञेया । तृतीयादौ प्रश्नलग्नात्तृतीय स्थान तस्माद् यद्राशिषट्क तस्मिन् अर्थात्तृतीयस्थाना दष्टम स्थान यावत् तावत् पौरा पुरे भवा पौरा नागरा बोध्या । शुभसयुक्त भागे विजय स्यात् । अपरे क्रूरसयुक्ते भागे भङ्ग पराभव स्यादित्यर्थ । सौम्यैरिति । सौम्यै शुभग्रहै लग्नऽथवा लाभेऽथवा व्यये नरराशिगतैर्मिथुनकन्यातुलाकुम्भधनुराद्यभागस्थितै नृपाणा राज्ञा सन्धि सन्धान भवति इति प्रवदेत् । दैवज्ञ इति शेष । अत उक्त-प्रकारात् अन्यथा विपर्ययो वैपरीत्य ज्ञेयो बोध्य इति । क्रूरग्रहैरुक्तभावेषु नरराशि स्थैरसधि स्यादित्यर्थ । वृद्धयवशासा तु बहुना प्रकारेण जयपराजयज्ञानमुक्तम् । "सुत धनुर्गते पापे शत्रुर्नागोऽभिवर्तते । चतुर्थगैरपि प्राप्त शत्रुर्भग्नो निवर्तते ॥ झषालि-कुम्भकर्कटा रसातले यदा स्थिता । रिपो पराजयस्तदा चतुष्पदै पलायनम् ॥ चरोदये शुभ स्थिन शुभ करोति यायिनाम् । अशोभनैरशोभन स्थिरोदयेऽपि वा शुभम् ॥ चरे शशी लग्नगतो द्विदेह पयोऽर्थमागत्य निवर्तते रिपु । विपर्यये चागमन द्विधा स्यात्पराजय स्याद्गुभेक्षिते तु ॥ अर्कविज्ञनितानामेकोऽपि चरोदये यदा भवति । प्रवदेत्तदाशु गमन वक्रगतैर्नेति वक्तव्यम् ॥ स्थिरोदये जीवशनैश्चरेक्षिते गमा-गमौ नैव वदेत्तु पृच्छत । निपमपृष्ठा रिपुसगमाय पापाश्चतुर्था विनिवर्तनाय ॥ नाग-च्छति परबल यदार्कचन्द्रौ चतुर्थभवनस्थौ । बुधगुरुशुक्रा हिबुके यदा तदा शीघ्रमा याति ॥ मेषधनु सिंहवृषा यद्युदयस्था भवन्ति हिबुके वा । शत्रुर्निवर्तते तदा ग्रह-सहिता वा वियुता वा ॥ स्थिरराशौ यद्युदये शनिर्गुरुर्वा स्थितस्तदा शत्रु । उदये रवि-र्गुरुर्वा चरराशौ स्यात्तदा गमनम् ॥ ग्रह सवोत्तमबलो लग्नायस्मिन् गृहे स्थित । मासैस्त त्तुल्यसख्यार्कैर्निवृत्तिं यात्रुरादिशेत् ॥ चरादास्थे ग्रहे तस्मिन् कालमेव विनिर्दिशेत् । द्विगुण स्थिरभागस्थे त्रिगुण द्यात्मकादके ॥ यातुर्विलग्नाद्यभिवभवनाधिपतिर्यदा । करोति वक्रमावृत्ते काल त ब्रुवत परे ॥ उदयर्क्षाचन्द्रर्क्ष भवति च यावद्दिनानि तावद्भि । आगमन स्याच्छत्रोर्यदि मध्ये न ग्रह कश्चित् ॥ दशमोदयसप्तमगा सौम्या नगराधिपस्य विजयकरा । अ रार्कीज्ञगुरुसिता प्रभगदौ विजयदा नवमे ॥ पौरास्तृतीय भवनाद्दर्भोद्वा यायिन शुभे शुभदा । व्ययदशमाये पापा पुरस्य नेष्टा शुभा यातु ॥ नृराशिसस्था ह्युदये शुभा स्युर्व्ययायसस्थाथ यदा भवन्ति । तदातु सन्धि प्रवदेत्नृपाणां पापैर्द्विदेहोपगतैर्विरोधम् ॥" भुवनदीपके तु दुर्गभङ्गस्य विशेषलक्षणमुक्त 'पृच्छाया मूर्तिगे क्रूरे दुर्गभङ्गो न जायते । बलहीनेऽपि वक्तव्य किं पुनर्बलशालिनि ॥ क्षितिपुत्रो विशेषेण राहुर्यदि विलग्नग । शक्रणाऽपि तदा दुर्गभङ्ग कर्तुं न शक्यते ॥ सप्तमो यदि राहु स्याद्दुर्गं चापि भज्यते । मूर्तौ क्रूर शुभोऽमुष्मिन् क्रूरदृष्टेन शोभना ॥ मूर्तौ सप्तमयो क्रूराभावे लग्नपतिर्व्यये । षष्ठेऽष्टमे द्वितीये वा तदा दुर्गं न भज्यते" इति ॥

सन्धेर्लक्षण वासवानन्देन सम्यगुक्त तत्र 'देवेज्येन्दुजोशनोभि ग्रामसीमारस्थानसौ-स्त्रिभिर्वा बलिष्ठैः । द्वन्यात्याथि स्थायिन जन्मभूमौ याम्युर्स्वस्वे स्याद् द्वयोराशु सन्धि । युग्मे सौम्या धर्मगाः क्रूरगेहा स्थाणेर्देशप्रदान यामिभूपात् । वृष्टेनरथा लग्नरिष्फाययाता सौम्या सन्धि कुर्वते युद्धतो हि । लग्नायोनयूनभावेशयोस्तु मध्ये यो वा व्योमचारी प्रदिष्ट । तद्वर्गीयान्मानवादेव सन्धि सौम्यैर्विद्धच्छिलिपिभिर्व्याहरन्ति ।" अथ प्रसगाद् वादिप्रतिवादिनोर्जयपराजयज्ञान प्रश्नभूषणे उक्त च । "वादिनो विजयप्रश्ने लग्ने क्रूरे तदा जय । यदि स्यात्सप्तमे क्रूरे विजय प्रतिवादिन । लग्ने च सप्तमे क्रूरावनयोर्बलिनो जय । यदा द्वौ बलिनौ स्याता सन्धिर्वा विग्रहो महान् । अथवा यत्र शुक्रस्थौ पापौ पूर्णदृशा मिथ । पश्यतोऽस्त्रप्रहारेण वादिनो मरण भवेत् । क्षतोपद्रवे कष्टे विवादे वा रणान्तरे । लग्ने पापे जयोऽन्यस्य पापदृष्टा पराजय ।"

अधुना रोगिशु खसुखज्ञानमाह ।

**उपचयसंस्थश्चन्द्रः, सौम्याः केन्द्रत्रिकोणनिधनस्थाः ।**
**लग्ने वा शुभदृष्टे, सुखितस्त्वातुरो वाच्यः ॥ २७ ॥**
**परिपूर्णतनुश्चन्द्रो, लग्नोपगतो निरीक्षितो गुरुणा ।**
**गुरुशुक्रौ केन्द्रे वा, विपीडितार्तोऽपि सुखित. स्यात् ॥ २८ ॥**

**उपचयेति** । परिपूर्णेति च । चन्द्र उपचयसस्थस्तृतीयषष्ठदशमैकादशानामन्यतमे स्थाने स्थित । 'दुश्चिक्यगभाम्बरषष्टगेह प्रोक्त तथैवोपचयभि"त्यभिधानात् सौम्या शुभग्रहा केन्द्रत्रिकोणनिधनस्था लग्नचतुर्थपचमसप्तमाष्टमनवमदशमानामन्य लग्ने स्थिता अथवा लग्ने प्रश्नलग्ने शुभदृष्टे शुभग्रहैर्दृष्टे सति तत्र तस्मिन् प्रश्नकाले सुखित सुखयुक्तोऽपि आतुरो रोगी वाच्य कथितव्य इति । परिपूर्णतनुश्चन्द्र शुक्लेयादशीत कृष्णपक्षमीपर्यन्त यावत्तो राज्यस्तासु पूर्णशरीरश्चन्द्रो भवति । उक्त च जातकपारिजाते । "शुक्लादिरात्रिदशकेऽहनि मध्यवीर्यशाली द्वितीयदशकेऽतिशुभप्रदोऽसा"विति । लग्नेति । लग्नोपगत प्रश्नलग्ने स्थित गुरुणा बृहस्पतिना निरीक्षितो दृष्ट अथवा गुरुशुक्रौ बृहस्पतिशुक्रौ केन्द्रे लग्नचतुर्थसप्तमदशमानामन्यतमे स्यातामिति शेष । चेत् विपीडितार्तोऽपि दु खितरोगयपि तदा सुखित सुखयुक्त स्याद् भवेदिति । नीलकण्ठेन तु बहुना प्रकारेण रोगिणो जीवनमरणज्ञानमुक्तम् । 'विलग्ने षष्ठप पापौ जन्मराशिं निरीक्षते । रोगिणस्तस्य मरण निश्चयेन वदेद्बुध । चतुर्थाष्टमगे चन्द्रे पापमध्यगतेऽपि वा । मृति साद्वित्सयुक्ते सौम्यदृष्ट्याऽचिरात्सुखम् । विधौ लग्ने स्वरे भानौ रोगी याति यमालयम् । प्रश्ने क्रूरग्रहे लग्ने रोगवृद्धिस्थिरत्त्वकात् । तथा लग्नगते सौम्ये वैद्योक्तमृत वच । लग्न वैद्यो दुन व्याधि ख रोगी तुर्यमौषधम् । रोगिणो भिषजो मैत्री मैत्रे भैषजयोगयो । व्याधेरुपशमो वाच्य प्रकोप शात्रवे तयो । लग्ननाथे च सबले केन्द्रसस्थे शुभग्रहे । उच्चगे वा त्रिकोणे वा रोगी जीवति निश्चयम् । एक शुभो बली लग्ने नायते रोगपीडितम् । सौम्या धर्मारिलाभस्थास्तृतीयस्था गदापहा ।" अथ प्रसगाद् देवदोषज्ञानम् "वह्यब्दद्वादशे षष्ठे लग्नात्पापग्रहो यदि । हतो गदैर्जलै शस्त्रैस्तस्य

दोषः कुलोद्भवः । देवस्य मेषे गवि पितृपक्षे आकाशदेव्या मिथुनेऽथ कर्के । स्याच्छाकिनी क्षेत्रपतिस्तु सिंहे स्त्रिया कुलार्हा च तुले तु मातुः । नागस्त्वलौ यक्षपतिर्धनुष्ये नक्रेऽम्बुदेव्यास्तु घटे तु यक्षी । झषे कुलोपासितदैवतस्य दोषं भवेदर्कबहिष्कृताय । प्रेताश्च राहौ पितरः सुरेज्ये चन्द्रेऽम्बुदेव्यस्तपनेऽपि देव्यः । खगोत्रदेव्यश्च शनौ बुधे च भवन्ति भूता व्यचरन्भवस्थे । शाकिन्य आरे भृगुजेऽम्बुदेव्यो गृह्णन्ति मर्त्यं विमुखं मुकुन्दात् । स्वर्क्षोच्चगे वीर्ययुते च साध्याश्चन्द्रे च नीचे विकले न साध्या । केन्द्रमर्थैर्बलिभिः पापैरसाध्या देवतागणाः । सौम्यग्रहैश्च केन्द्रस्थैः साध्या मन्त्रस्तवार्चनैः । षट्कारिनिकोणस्थाः शुभा उपचये शशी । लग्ने च शुभसदृष्टे रोगी रोगाद्विमुच्यते ।

अधुना विवाहप्रश्ने स्त्रीणां लाभालाभज्ञानमाह ।

जामित्रोपचयगतः, शीतांशुर्जीववीक्षितः कुरुते ।
स्त्रीलाभं पापयुतो,ऽवलोकितो वापि तन्नाशम् ॥ २९ ॥
दुश्चिक्यतनयसप्तम, रिपुलाभगतः शशी विलग्नर्क्षात् ।
गुरुरविसौम्यैर्दृष्टो, विवाहदः स्यात्तथा सौम्याः ॥ ३० ॥
केन्द्रत्रिकोणगा या, सप्तमभवनं शुभग्रहस्य यदि ।
तज्जातीयां लभते, पापर्क्षे विगतरूपां च ॥ ३१ ॥

**जामित्रेति** । दुश्चिक्येति । केन्द्रत्रिकोणेति च । शीतांशुश्चन्द्रमा जामित्रोपचयगतः जामित्रं सप्तमस्थानं उपचयः तृतीयषष्ठैकादशदशमानामन्यतमस्थानं तत्र गतः समवस्थितः जीववीक्षितश्च बृहस्पतिना दृष्टः तदा स्त्रीलाभं स्त्रियाः प्राप्तिं कुरुते विधत्ते । प्रष्टुरिति शेषः । यदि तत्रगतः चन्द्रः पापयुतः अशुभग्रहैर्युक्तः अथवा तैरवलोकितो दृष्टस्तदा तन्नाशम् स्त्रियाः अलाभं करोतीत्यर्थः । एवमाह वासवानन्दः "धनविक्रमस्तारिलाभकामोपगतोऽब्जो गुरुवीक्षितः करोति । वनिताप्तिमतोऽन्यभावगोऽसौ सहितः पापखगैरलब्धिमस्याः" इति । दुश्चिक्येति । शशी चन्द्रः विलग्नर्क्षात् प्रश्नलग्नात् दुश्चिक्यं तृतीयस्थानं तनयं पंचमस्थानं सप्तमं प्रसिद्धं रिपुः षष्ठस्थानं लाभमेकादशस्थानं तत्रगतः समवस्थितः । गुरुर्बृहस्पतिः रविः सूर्यः सौम्यो बुधः तैर्दृष्टोऽवलोकितश्चेत्तदा विवाहदः विवाहं पाणिग्रहणं ददाति तथा तेन प्रकारेण सौम्याः शुभग्रहाः केन्द्रत्रिकोणगाः विवाहप्रदा भवन्ति । एवमाह पृथुयशाः "गुरुरविसौम्यैर्दृष्टस्त्रिसुतमदायारिगः शशी लग्नात् । भवति च विवाहकर्ता त्रिकोणकेन्द्रेषु वा सौम्याः" इति । एतादृग् जीवनाथेनापि स्पष्टमुक्तं "त्रिकोणकेन्द्रगा गुरुज्ञशुक्रशीतभानवः । यदीह लग्नतो भवन्ति वा विवाहकारकाः" इति । सप्तमभवनमिति । सप्तमभवनं प्रश्नलग्नात्सप्तमराशिः शुभग्रहस्य भवति यदि चेत्तदा तज्जातीयां तस्य सप्तमेशस्य या जातिर्यद्रूपं च तद्वल्लभते प्राप्नोति । स्त्रीमिति शेषः । चेत्सप्तमस्थाने पापर्क्षे अशुभग्रहस्य राशिस्तस्मिन् भवति तदा विरूपां रूपरहितां स्त्रीं लभते । प्रष्टेति शेषः । अर्थाद् यादृशस्य ग्रहस्य राशिः सप्तमे तिष्ठति तादृशीं स्त्रियं प्राप्नोतीति भावः ।

अधुना गर्भिणीस्त्रीज्ञानं पुत्रपुत्रीज्ञानं चाह ।

पञ्चमलाभोपगतैः, सौम्यैः स्त्रीगर्भिणीति वाच्यं वै ।
जीवरविलग्नचन्द्रा, विषमर्क्षगता नरं कुर्युः ॥ ३२ ॥
समराशिगताः कन्यां, मिश्रोपगते बलाधिकाद्वाच्यम् ।
सौरो विषमर्क्षगतो, लग्नात्पुंजन्मदः प्रोक्तः ॥ ३३ ॥
विषमर्क्षे गुरुशुक्रौ, बलिनौ पुंजन्मदः प्रश्ने ।
गुरुभौमशीतकिरणा, युग्मर्क्षगताः स्त्रियं कुर्युः ॥ ३४ ॥

**पञ्चमेति** । समराशिगता इति । विषमर्क्षे इति च । सौम्यैः पूर्णचन्द्रनिष्पापबुधगुरुशुक्रैः पञ्चमं प्रसिद्धं लाभमेकादशस्थानं तत्रोपगतैः समवस्थितैः तदा स्त्री नारी गर्भिणी गर्भवतीति वाच्यं वक्तव्यम् । जीवो बृहस्पतिः रविः सूर्यः लग्नं चन्द्रः ते विषमर्क्षेषु लग्नात्तृतीयपञ्चमसप्तमनवमैकादशस्थानानां अन्यतमेषु गताः समवस्थिताः कन्यां पुत्रीं कुर्वन्ति । मिश्रोपगते समविषमराशिस्थिते बलाधिकाद् बलिष्ठग्रहात् वाच्यं वक्तव्यम् । पुत्रः पुत्री वा इति शेषः । गुरुसूर्यलग्नचन्द्राणां मध्ये कश्चिद्विषमर्क्षस्थितः कश्चित्समर्क्षस्थितस्तत्र तु यो बली ग्रहस्तस्मात् पुत्रः पुत्री वा कथितव्यमित्यर्थः । एवं श्रीमता वासवानन्देनाऽप्युक्तं "रविगुरुलग्नकलानिधयश्चेद्विषमभगाः सुतजन्मकराः स्युः । विदधति ते समगास्तु तनूजां तदनु बलाबलतः परिमिश्रै"रिति । सौर इति । सौरः शनिः लग्नाद् विषमर्क्षगतो लग्नात्तृतीयपञ्चमसप्तमनवमैकादशानामन्यतमे स्थितश्चेत् तदा पुंजन्मदः पुत्रजन्म ददातीति प्रोक्तः कथितः । प्रश्नज्ञैरिति शेषः । एतादृशं बुधैर्यथा अप्याह "विषमस्थितेऽर्कपुत्रे सुतस्य जन्माऽन्यथाऽऽम्नायाश्चेति" एवं वराहेणाऽप्युक्तं 'विहाय लग्नं विषमर्क्षसंस्थः सौरोऽपि पुंजन्मकरो विलग्नात् । अन्यथाऽऽम्नायास्त्विति' । विषमर्क्षे इति । प्रश्ने प्रश्नसमये बलिनौ बलवन्तौ गुरुशुक्रौ बृहस्पतिशुक्रौ विषमर्क्षे लग्नात्तृतीयपञ्चमसप्तमनवमैकादशानामन्यतमे स्थितौ चेत्तदा पुंजन्मदौ पुत्रजन्मप्रदौ भवत इत्यर्थः । एवं गुरुर्बृहस्पतिः भौमः प्रसिद्धः शीतकिरणश्चन्द्रः ते युग्मर्क्षगता लग्नाद् द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशानामन्यतमेषु गताः समवस्थिताश्चेत्तदा स्त्रियं कन्यां पुत्रीं कुर्वन्तीत्यर्थः । श्रीमता वासवानन्देन बलिगुरुसूर्यौ विषमर्क्षे पुत्रप्रदौ प्रोक्तौ तद्यथा "जीवादित्यौ विषमभयातौ पुत्रं विधायदि बलयुक्तौ । युग्मर्क्षस्था गुरुकुविसोमाः कन्यायास्स्युर्जन्मकरास्ते" इति ।

अधुना ग्रहाणां रसज्ञानपूर्वकं भोजनज्ञानमाह ।

कटुको लवणस्तिक्तो, मिश्रो मधुराम्लकौ कषायश्च ।
सूर्यादितो रसः स्या-, त्प्रश्ने बलवाँश्चतुष्पदः ॥ ३५ ॥
पश्यति यस्तत्काले, लग्नगतस्य ग्रहस्य यः प्रोक्तः ।
स रसः प्रष्टुर्वाच्यो, भोजनकाले त्वयं क्रमादपरः ॥ ३६ ॥
सौम्यर्क्षगतस्य शुभं, पापर्क्षगतस्य नीरसं वाच्यम् ।
विपरीतगतेरश्मे, ग्रासमपि न भक्षयेत्प्रोक्तम् ॥ ३७ ॥

अधुना ग्रहाणां वर्णज्ञानमाह ।

**रक्तौ सूर्यावनिजौ, श्वेतौ शशिभार्गवौ विनिर्दिष्टौ ।**
**हरितः सौम्यः प्रदिष्टः जीवः पीतः शनिस्तथा कृष्णः ॥ ४९ ॥**

**रक्ताविति** । सूर्यावनिजौ सूर्यभौमौ रक्तौ लोहितौ वर्णौ ज्ञेयौ शशिभार्गवौ चन्द्रशुक्रौ श्वेतौ सितौ विनिर्दिष्टौ कथितौ सौम्यो बुधः हरितो दूर्वासदृशः प्रदिष्टः कथितः जीवो बृहस्पतिः पीतः पिङ्गलः तथा शनिः कृष्णः श्यामो ज्ञेय इति । उक्तं च भुवनदीपके "रक्तवर्णः पुनः प्रोक्तो धिषणः कनकद्युतिः । शुक्रः पिच्छगमः (नीलकान्तिः) सौम्यो गौरकान्तिरथोष्णगुः । मन्दारार्कस्य पुष्पेण समद्युतिरहुष्णगुः । कपिरत्यन्तधवलः फणी कृष्णः शनिस्तथे"ति ।

अधुना ग्रहाणां देहस्वरूपज्ञानमाह ।

**चतुरस्रोऽर्को भौमो, वृत्तः सुषिरेन्दुरिन्दुजो दीर्घः ।**
**दीर्घः सुतनुः शुक्रो, जीवः परिवर्त्तुलो ज्ञेयः ॥ ५० ॥**
**अतिसूक्ष्मो भृगुतनयो, दीर्घः सुषिरान्तरोऽर्कतनयः स्यात् ।**
**हृतनष्टादौ प्रश्ने, द्रव्यं सबलाद् ग्रहात्प्रवदेत् ॥ ५१ ॥**

**चतुरस्र इति** । अतिसूक्ष्म इति च । अर्कः सूर्यः चतुरस्रश्चतुष्कोणाकृः । भौमो वृत्तो वृत्ताकारः इन्दुश्चन्द्रः सुषिरो बिलाकारः इन्दुजो बुधो दीर्घ उच्चः शुक्रो दीर्घ उच्चः सुतनुः सुन्दरशरीरः । जीवो गुरुः परिवर्त्तुलो वर्त्तुलाकारो ज्ञेयो बोध्यः । भृगुतनयः शुक्रोऽतिसूक्ष्मोऽत्यन्तकृशः । अर्कतनयः शनिः दीर्घ उच्चः सुषिरान्तरश्छिद्रमध्यः स्याद् भवतीति हृतनष्टादौ प्रश्ने सबलाद् ग्रहात् बलिष्ठग्रहाद् द्रव्यं धनं प्रवदेत् कथयेत् । उक्तञ्च भुवनदीपके "स्थूलः इन्दुः सितः पतङ्गश्चतुरस्रौ कुजोष्णगू । वर्तुलौ सौम्यधिषणौ दीर्घौ शनिभुजगमावि"ति ।

अधुना धात्वादिचिन्ताज्ञानमाह ।

**मेषालिसिंहलग्ने, कुजार्कयुक्ते निरीक्षितेऽथवा ।**
**धातोश्चिन्तां प्रवदे, द्युगघटकन्यामृगैर्लग्नैः ॥ ५२ ॥**
**बुधरविजयुतैर्मूलं, वृषतुलहरिमीनचापकर्कटके ॥**
**चन्द्रगुरुशुक्रयुक्ते, दृष्टेर्जीवो विनिर्देश्यः ॥ ५३ ॥**

**मेषालीति** । बुधरवीति च । मेषः प्रसिद्धः अलिर्वृश्चिकः सिंहः प्रसिद्ध एषां लग्ने प्रश्नलग्ने सति । कुजो भौमः अर्कः सूर्यः आभ्यां युक्ते अथवा निरीक्षिते दृष्टेऽपि तदा धातोर्धातुसम्बन्धिनीं चिन्तां स्मृतिं प्रवदेत् कथयेत् । दैवज्ञ इति शेषः । अथ शब्दोऽनन्तरवाची । युगो मिथुनः घटः कुम्भः कन्या प्रसिद्धा मृगो मकरः एतैर्लग्नैः बुधरविजयुतैर्बुधशनिभ्यां युतैर्युक्तैर्मूलं काष्ठादिकं वाच्यमिति शेषः । वृषतुले प्रसिद्धे हरिः सिंहः मीनः प्रसिद्धः चापो धनुः कर्कटकः कर्कः एभिश्चन्द्रगुरुशुक्रैर्युक्तैर्दृष्टैर्वा जीवो मनुष्यादिकः विनिर्देश्यो वक्तव्य इति । अर्थाज्जीवसम्बन्धिनीं चिन्तां कथयेदिति भावः । सा च

मृगुजश्चन्द्रवदेव कीर्तित । शुभखेचरवीक्षितादिमावनुयोगावसरे स्थिराम्बुदौ । लघुपुष्करदौ खलेक्षितौ भवयोर्न्योऽपि शुभेक्षितोऽम्बुद । हिबुकर्क्षगतौ सितार्कजौ तनुत प्राङ्गपि वृष्टिकारकौ । धनविक्रमरन्ध्रगौ तथा मिहिरात्काभगतावुताम्नत इति । पृथुयशा अप्याह "चन्द्रार्कयो सप्तमगौ सितार्कौ सुखेऽष्टमे वापि तथा विलग्नात् । द्वितीयदुश्चिक्यगतौ तथा च वर्षासु वृष्टिं प्रवदेन्नराणाम्" इति । जलराशिगता इति । सौम्या शुभग्रहा जलराशिगता कर्कमकरकुम्भमीनराशिषु स्थिता अथवा कण्टकधनसंस्थिता लग्नद्वितीयचतुर्थसप्तमदशमानि एतेषु स्थिता स्यु अथवा चन्द्रे चन्द्रमसि उदयगते प्रश्नलग्ने स्थिते सति तदा पृच्छासमये प्रश्नकाले वृष्टिं वर्षण वदेत् कथयेत् । प्राश्निक इति शेष । एवमाह पृथुयशा "सौम्या जलराशिस्था स्तृतीयधनकेन्द्रगा सितेपक्षे । चन्द्रे वाऽप्युदयगते जलराशिस्थे वदेद्वर्ष"मिति ।

अधुना चौरज्ञानार्थं मेषादिराशीना ह्रस्वादिसंज्ञाज्ञानमाह ।

मेषवृषभघटमीना ह्रस्वा नृयुग्मकर्किमकरधनूंषि ।
मध्या हरियुवतितुला,लयः स्मृता लग्नगा दीर्घाः ॥ ४७ ॥

**मेषवृषभेति** । मेष प्रसिद्ध वृषभो वृष घट कुम्भ मीन प्रसिद्ध एते लग्नगा प्रश्नलग्नस्थिता ह्रस्वा वामना स्मृता ज्ञेया । नृयुग्मो मिथुन कर्की कर्क मकरधनुषी प्रसिद्धे एते मध्या समा । हरि सिंह युवति कन्या तुला प्रसिद्धा अलिर्वृश्चिक एते दीर्घा उच्चा ज्ञेया लग्नगा इति सर्वत्र योज्या । केषाचिन्मते तु मीनराशिर्मध्यमोऽस्त उक्त च वैद्यनाथेन । "ह्रस्वा गोऽजघटा समा मृगनृयुक् चापान्त्यकर्कटका दीर्घा वृश्चिककन्यकाहरितुला" इति । कल्याणवर्मणा तु स च ह्रस्व एवोक्त "ह्रस्वालिमिगोऽज घटा" इत्यादि सुधीभिर्मृश विचिन्त्यम् ।

अधुना मौष्टिकादिप्रश्ने सूर्यादिग्रहतो धात्वादिचिन्ताज्ञानमाह ।

बलिनौ केन्द्रोपगतौ, रविभौमौ धातुकारकौ प्रश्ने ।
बुधसौरी मूलकरौ, शशिगुरुशुक्राः स्मृता जीवाः ॥ ४८ ॥

**बलिनाविति** । यदा प्रश्ने पृच्छाकाले बलिनौ बलवन्तौ रविभौमौ सूर्यभौमौ केन्द्रोपगतौ लग्नचतुर्थसप्तमदशमानामन्यतमे समवस्थितौ तदा धातुकारकौ धातुकर्त्तारौ ज्ञेयौ बुधसौरी बुधशनी मूलकरौ मूलकारकौ बोध्यौ शशी चन्द्र गुरुर्बृहस्पति शुक्र प्रसिद्ध एते जीवा जीवकर्त्तार स्मृता ज्ञेया इति । नन्दनाचार्येण सूर्यो धातुकारक उक्त शुक्रो जीवकारक उक्त बुधशनी मूलकरौ उक्तौ चन्द्रो जीवकर उक्त । एष तु कथमुक्त यतो भुवनदीपके "मन्देन्दूरगभौमा स्युर्धातु सवितृभार्गवौ । मूल जीवश्च सौम्यश्च जीवं प्राहुर्महाधिय" इति । अत आचार्यपञ्चप्रश्नो सम्मतिरन्योन्य वैषम्या जाता । अत्र तु का प्राह्या या बहूना सम्मति सा ग्रहणीया । आचार्यसम्मति रिव वैद्यनाथादिभिरप्युक्ता सा चेय •"धातुस्वरूपकुचरौ कुजारणौ मूलप्रधानौ तुहिनाकरार्कजौ । जीवौ सिताप्यौं तु विमिश्रमिन्दुज" इति । अत्रापि चन्द्रो मूलप्रधान उक्त बुधश्च मिश्र उक्त तेनेहापि विचारणीयविषयमिति ।

अधुना ग्रहाणां वर्णज्ञानमाह ।

**रक्तौ सूर्यावनिजौ, श्वेतौ शशिभार्गवौ विनिर्दिष्टौ ।**
**हरितः सौम्यः प्रदिष्टः जीवः पीतः शनिस्तथा कृष्णः ॥ ४९ ॥**

**रक्ताविति** । सूर्यावनिजौ सूर्यभौमौ रक्तौ लोहितौ वर्णौ ज्ञेयौ शशिभार्गवौ चन्द्रशुक्रौ श्वेतौ सितौ विनिर्दिष्टौ कथितौ सौम्यो बुध हरितो दूर्वासदृश प्रदिष्टः कथित जीवो बृहस्पति पीत पिङ्गल तथा शनि कृष्ण श्यामो ज्ञेय इति । उक्तं च भुवनदीपके 'रक्तवर्णं कुज प्रोक्तो धिषण कनकद्युति । शुक्र पिच्छसम (नील-कान्ति) सौम्यो गौरकान्तिरथोष्णगु । मन्दारार्कस्य पुष्पेण समद्युतिरंशुमान् । कथिरलन्तधवल फणी कृष्ण शनिस्तथे"ति ।

अधुना ग्रहाणां देहस्वरूपज्ञानमाह ।

**चतुरस्रोऽर्को भौमो, वृत्तः सुषिरेन्दुरिन्दुजो दीर्घः ।**
**दीर्घः सुतनुः शुक्रो, जीवः परिवर्तुलो ज्ञेयः ॥ ५० ॥**
**अतिसूक्ष्मो भृगुतनयो, दीर्घः सुषिरान्तरोऽर्कतनयः स्यात् ।**
**हतनष्टादौ प्रश्ने, द्रव्यं सबलाद् ग्रहात्प्रवदेत् ॥ ५१ ॥**

**चतुरस्र इति** । अतिसूक्ष्म इति च । अर्क सूर्य चतुरस्रश्चतुष्कोणाद्य । भौमो वृत्तो वृत्ताकार इन्दुश्चन्द्र सुषिरो बिलाकार इन्दुजो बुधो दीर्घ उच्च शुक्रो दीर्घ उच्च सुतनु सुन्दरशरीर । जीवो गुरु परिवर्तुलो वर्तुलाकारो ज्ञेयो बोध्य । भृगुतनय शुक्रोऽतिसूक्ष्मोऽत्यन्तकृश । अर्कतनय शनि दीर्घ उच्च सुषिरान्तरश्छिद्रमध्य स्याद् भवतीति हतनष्टादौ प्रश्ने सबलाद् ग्रहाद् बलिष्ठग्रहाद् द्रव्य धन प्रवदेत् कथयेत् । उक्तञ्च भुवनदीपके "स्थूल इन्दु सित चण्डश्चतुरस्रौ कुजोष्णगू । वर्तुलौ सौम्यधिषणौ दीर्घौ शनिभुजगमावि"ति ।

अधुना धात्वादिचिन्ताज्ञानमाह ।

**मेषालिसिंहलग्ने, कुजार्कयुक्ते निरीक्षितेऽथवा ।**
**धातोश्चिन्तां प्रवदे, द्युगघटकन्यामृगैर्लग्नैः ॥ ५२ ॥**
**बुधरविजयुतेर्मूलं, वृषतुलहरिमीनचापकर्कटकैः ॥**
**चन्द्रगुरुशुक्रयुक्ते, दृष्टेर्जीवो विनिर्देश्यः ॥ ५३ ॥**

**मेषालीति** । बुधरवीति च । मेष प्रसिद्ध अलिर्वृश्चिक सिंह प्रसिद्ध एषा लग्ने प्रश्नलग्नेसति । कुजो भौम अर्क सूर्य आभ्या युक्ते अथवा निरीक्षिते दृष्टेऽपि तदा धातोर्धातुसम्बन्धिनर्थाश्चन्ता स्मृति प्रवदेत् कथयेत् । दैवज्ञ इति शेष । अथ शब्दोऽनन्तरवाची । युगो मिथुन घट कुम्भ कन्या प्रसिद्धा मृगो मकर एतैर्लग्नै बुधरविजयुतैर्बुधशनिभ्या युतैर्युक्तैर्मूल वाद्यादिक वाच्यमिति शेष । वृषतुले प्रसिद्धे हरि सिंह मीन प्रसिद्ध चापो धनु कर्कट कर्क एभिश्चन्द्रगुरुशुक्रैर्युक्तैर्दृष्टैर्वा जीवो मनुष्यादिक विनिर्देश्यो वक्तव्य इति । अर्थाज्जीवसम्बन्धिनी चिन्ता कथयेदिति भाव । सा च श्रीमता

पृथुयशसा तु प्रकारान्तरेणोक्ता। "स्वांशे विलग्ने यदि वा त्रिकोणे स्वांशस्थितः पश्यति धातुचिन्ताम्। परांशकस्थश्च करोति जीवं मूलं परांशोपगतः परांशम्" । "धातुर्मूलं जीवमित्योजराशौ युग्मे विद्यादेतदेव प्रतीपम्। लग्ने योऽशस्त्वत् क्रमाद् गण्य एवं संक्षेपोऽयं विस्तरात्तत्प्रभेदा" इति । "कुमारिका बालशशी बुधश्च वृद्धा शनिः सूर्यगुरू प्रसूताम् । स्त्रीं कर्कशां भौमसितौ विधत्त एवं वयः स्यात्पुरुषेषु चैवम्। आत्मसमं लग्नगतैर्भ्राता सहजस्थैः सुतं सुतगैः । माता वा भगिनी वा चतुर्थगैः शत्रुगैः शत्रुः । भार्या सप्तमसंस्थैर्नवमे धर्माश्रितो गुरुर्दशमे । स्वांशपतिमित्रशत्रुषु तथैव वाच्यं बलयुतेषु । चरलग्ने चरभागे मध्याद् भ्रष्टे प्रवासिचिन्ता स्यात्। भ्रष्टः सप्तमभवनात् पुनर्निवृत्तो यदि न वक्री"ति । भुवनदीपके तु धातुचिन्ताज्ञानं विशेषतयोक्तं च । "शुक्रे चन्द्रे ( लग्नगते ) भवेद्रौप्यं बुधे स्वर्णमुदाहृतम् । गुरौ रत्नयुतं हेम सूर्ये मौक्तिकमुच्यते । भौमे त्रपु शनौ लोहं राहावस्थीति कीर्तयेत् । धातोर्विनिश्चये ज्ञाते विशेषोऽस्मादुदाहृत" इति ।

अधुना चौरज्ञानमाह ।

**स्थिरलग्ने स्थिरभागे, वर्गोत्तमकांशके हृतं द्रव्यम् ।**
**आत्मीयेनेति वदेच्चरराशौ परजनेन हृतम् ॥ ५४ ॥**

**स्थिरलग्न इति** । स्थिरा वृषसिंहवृश्चिककुम्भा एतेषामन्यतमे, लग्ने प्रश्नलग्ने अथवा यस्यकस्यचिद्राशेः स्थिरभागे स्थिरनवांशके वर्तमाने अथवा लग्नगतस्य यस्य कस्यचिद्राशेर्वर्गोत्तमकांशके वर्गोत्तमनवांशे वर्तमाने "वर्गोत्तमाश्चरगृहादिषु पूर्वमध्यपर्यन्तगाः शुभफला नवभागसंज्ञा " इत्यनेन वर्गोत्तमलक्षणं ज्ञेयम् । हृतमिति । हृतं द्रव्यं धनं तदात्मीयेन स्वकीयेनैव केनचिच्चोरितमिति वदेत् कथयेत् । दैवज्ञ इति शेषः । चेत्प्रश्नलग्ने चरराशौ मेषकर्कतुलामकराणामन्यतमे राशौ वर्तमाने तदा तु परजनेन परकीयेनैव केनचिद्धृतं चोरितं ज्ञेयमिति । एवं पृथुयशा अप्याह "स्थिरोदये स्थिरांशे वा वर्गोत्तमगतेऽपि वा । स्थितं तत्रैव तद्द्रव्यं स्वकीयेनैव चोरित"मिति ॥

अधुना स्थानज्ञानं तस्करस्य जातिरूपज्ञानं चाह ।

**द्विशरीरे लग्नगते, गृहनिकटनिवासिना च हृतम् ।**
**स्थिरराशौ तत्रस्थं, चरराशौ निर्गतं बहिर्भवनात् ॥ ५५ ॥**
**द्विशरीरे गृहबाह्ये, भूमिगतं विनिर्दिशेद् द्रव्यम् ।**
**लग्नस्वामिसमानं जातिं रूपं च तस्करस्य वदेत् ॥ ५६ ॥**

**द्विशरीरे लग्नगत इति** । द्विशरीरे गृहबाह्य इति च । द्विशरीरा मिथुनकन्याधनुर्मीना एतेषामन्यतमे लग्नगते प्रश्नलग्नस्थिते तदा गृहनिकटनिवासिना गृहं स्वगृहं तस्य निकटे समीपे निवासी स्थितस्तेनैव केनचिच्चोरितम् । वक्तव्यमिति शेषः । यदि प्रश्नलग्ने स्थिरराशौ वर्तमाने तदा तद् द्रव्यं तत्रस्थं तस्मिन्नेव स्थाने स्थितमिति वाच्यम् । यदि चरराशौ वर्तमाने लग्ने तदा तु भवनात् स्वगृहात् बहिर्गतं बाह्यस्थानचलितं वक्तव्यमिति । चेत् प्रश्नलग्ने द्विशरीरे द्विस्वभावराशौ वर्तमाने तदा तु द्रव्यं धनं गृहबाह्ये

स्वगृहस्य वहिः भूमिगतं पृथिव्यां स्थितं विनिर्दिशेत् कथयेदिति । श्रीमान् पृथुयशास्तु प्रकारान्तरेणाह "आदिमध्यावसानेषु द्रेष्काणेषु विलग्नतः । द्वारदेशे तथा मध्ये गृहान्ते च वदेद्धनमि"ति । लग्नेति । लग्नस्वामिसमानं लग्नं प्रश्नलग्नं तस्य यः स्वामी अधिपः तत्समानं तत्सदृशं तस्करस्य चौरस्य जातिं स्वं च वदेत् कथयेत् । अर्थात् प्रश्नलग्नस्य स्वामिनो या जातिर्यद्रूपं यद्वयश्च तत्सदृशं तस्करस्यापि वाच्यमिति भावः ।

अधुना लाभालाभज्ञानं दिग्ज्ञानं चौरस्याज्ञानं चाह ।

पूर्णशरीरश्चन्द्रो, लग्नोपगतः शुभग्रहो वा स्यात् ।
सौम्यावलोकितं वा, भवनं शीर्षोदये लग्ने ॥ ५७ ॥

लाभगतैर्वा सौम्यैः, राश्वेव धनस्य विनिर्दिशेल्लब्धिम् ।
लग्नाद् द्वितीयभवने, तृतीयके वा शुभग्रहैर्युक्ते ॥ ५८ ॥
प्रष्टा लभते वित्तं, सौम्यैर्वैन्यस्तपञ्चदशमगतैः ।
केन्द्रस्थैर्दिग्वाच्या ग्रहैर्विलग्नाद्सम्भवे वाऽन ॥ ५९ ॥

पूर्णशरीर इति । लाभगतैरिति । प्रष्टेति च । पूर्णशरीरः परिपूर्णमण्डलश्चन्द्रः लग्नोपगतः लग्ने समवस्थितः अथवा शुभग्रहो लग्नस्थः अथवा भवनं लग्नं सौम्यैः शुभग्रहैरवलोकितं दृष्टं अथवा शीर्षोदये लग्ने वर्तमाने । 'कन्यातुलायुग्मघटालिसिंहाः शीर्षोदयाख्या" इति शीर्षोदयलग्नान्युक्तानि । अथवा सौम्यैः शुभग्रहैः लाभगतैः प्रश्नलग्नादेकादशस्थानस्थितैः तदाशु शीघ्रमेव धनस्य द्रव्यस्य चोरितस्य नष्टस्य वा लब्धिं प्राप्तिं विनिर्दिशेत् कथयेत् । लग्नात् प्रश्नलग्नात् द्वितीयभवने द्वितीयस्थाने अथवा तृतीयके तृतीयस्थाने शुभग्रहैः पूर्णचन्द्रनिष्पापबुधगुरुशुक्रैर्युक्ते सहिते अथवा सौम्यैः शुभग्रहैः बुधचतुर्थं अस्तं सप्तमं पञ्चदशमौ प्रसिद्धौ तेषामन्यतमेषु गतैः समवस्थितैः प्रष्टा प्रश्नकर्ता वित्तं धनं लभते प्राप्नोति । केन्द्रस्थैर्ग्रहैर्दिग् दिशा वाच्या वक्तव्या । अर्थाद् द्रव्यादिग्रहाणां मध्ये यः कश्चिद् ग्रहः लग्नचतुर्थसप्तमदशमानामन्यतमे स्थाने स्थितस्तस्य या दिक् तस्यां चोरितं धनं गतं वदेदिति भावः । "प्राच्यादितः सूर्यसितारराहुशनीन्दुविद्देवपुरोधसश्चे"ति ग्रहाणां दिशा उक्ता । विलग्नादिति । असंभवे केन्द्रे ग्रहासम्भवे विलग्नात्प्रश्नलग्नाद् दिग्वाच्येति । "प्राची च याम्या त्वथ पश्चिमोत्तरा त्रिर्मेषतः" इति राशीनां दिशा उक्ता आचार्यकथनमिव पृथुयशा अप्याह । "पूर्णः शशी लग्नगतः शुभो वा शीर्षोदये सौम्यनिरीक्षितश्च । नष्टस्य लाभं कुरुते तदाशु लाभोपयातो बलवान् शुभश्च । दिग्वाच्या केन्द्रगतैरसम्भवे वा वदेद्विलग्नर्क्षात् । मध्याद्युतैर्विलग्नाग्नवांशकैर्योजना वाच्या । अदाकाज्ज्ञायते द्रव्यं द्रेष्काणैस्तस्करा स्मृताः । राशिभ्यः कालदिग्देशा वयोजातिश्च लग्नपादि"ति ।

अधुना गर्भाधानहृतनष्टादौ प्रश्ने कालज्ञानमाह ।

उदयोपगतो राशिः, स्त्वाल्लिप्तीकृत्य लिप्तिका गुणयेत् ।
छायाङ्गुलैः पृथक्स्था, हृत्वा मुनिभिस्तथा शेषः ॥ ६० ॥

पृथुयशसा तु प्रकारान्तरेणोक्ता । "स्वांशे विलग्ने यदि वा त्रिकोणे स्वोरस्थितः पश्यति धातुचिन्ताम् । परांशकस्थश्च करोति जीवं मूलं परांशोपगतः परांशम्" । "धातुर्मूलं जीवमेलोजराशौ युग्मे विद्यादेतदेव प्रतीपम् । लग्ने योऽशस्तत् क्रमाद् गण्य एवं संक्षेपोऽयं विस्तरात्तत्प्रभेदा" इति । "कुमारिकां बालशशी बुधश्च वृद्धां शनिः सूर्यगुरू प्रसूताम् । स्त्री कर्कशा भौमसितौ विधत्त एवं वयः स्यात्पुरुषेषु चैवम् । आत्मसमं लग्नगतैरन्ता सहजस्थिते सुत- सुतगैः । माता वा भगिनी वा चतुर्थगैः शत्रुगैः शत्रुः । भार्या सप्तमर्क्षस्थैर्नवमे धर्माश्रितो गुरुर्दशमे । स्वाशपतिभिन्नशत्रुषु तथैव वाच्यं बलयुतेषु । चरलग्ने चरभागे मध्याद् भ्रष्टे प्रवासिचिन्ता स्यात् । भ्रष्टः सप्तमभवनात् पुनर्निवृत्तो यदि न वक्री"ति । भुवनदीपके तु धातुचिन्ताज्ञानं विशेषतयोक्तं च । "शुक्रे चन्द्रे ( लग्नगते ) भवेद्रौप्यं बुधे स्वर्णमुदाहृतम् । गुरौ रत्नयुतं हेम सूर्ये मौक्तिकमुच्यते । भौमे त्रपु शनौ लोहं राहावस्थीति कीर्त्तयेत् । धातोर्विनिश्चये ज्ञाते विशेषोऽस्मादुदाहृत" इति ।

अधुना चौरज्ञानमाह ।

**स्थिरलग्ने स्थिरभागे, वर्गोत्तमकांशके हृतं द्रव्यम् ।**
**आत्मीयेनेति वदेच्चरराशौ परजनेन हृतम् ॥ ५४ ॥**

**स्थिरलग्न इति** । स्थिरा वृषसिंहवृश्चिककुम्भा एतेषामन्यतमे, लग्ने प्रश्नलग्ने अथवा यस्य कस्यचिद्राशेः स्थिरभागे स्थिरनवांशके वर्तमाने अथवा लग्नगतस्य यस्य कस्यचिद्राशेर्वर्गोत्तमवांशके वर्गोत्तमनवांशे वर्तमाने "वर्गोत्तमश्चरगृहादिषु पूर्वमध्यपर्यन्तगा शुभफला नवभागसंज्ञा" इत्यनेन वर्गोत्तमलक्षणं ज्ञेयम् । हृतमिति । हृतं द्रव्यं धनं तदात्मीयेन स्वकीयेनैव केनचिच्चोरितमिति वदेत् कथयेत् । दैवज्ञ इति शेषः । चेत्प्रश्नलग्ने चरराशौ मेषकर्कतुलामकराणामन्यतमे राशौ वर्तमाने तदा तु परजनेन परकीयेनैव केनचिद्धृतं चोरितं ज्ञेयमिति । एवं पृथुयशा अप्याह "स्थिरोदये स्थिरांशे वा वर्गोत्तमगतेऽपि वा । स्थितं तत्रैव तद्द्रव्यं स्वकीयेनैव चोरित"मिति ॥

अधुना स्थानज्ञानं तस्करस्य जातिरूपज्ञानं चाह ।

**द्विशरीरे लग्नगते, गृहनिकटनिवासिना च हृतम् ।**
**स्थिरराशौ तत्रस्थं, चरराशौ निर्गतं बहिर्भवनात् ॥ ५५ ॥**
**द्विशरीरे गृहबाह्ये, भूमिगतं विनिर्दिशेद् द्रव्यम् ।**
**लग्नस्वामिसमानं जातिं रूपं च तस्करस्य वदेत् ॥ ५६ ॥**

**द्विशरीरे लग्नगत इति** । द्विशरीरे गृहबाह्य इति च । द्विशरीरा मिथुनकन्याधनुर्मीना एतेषामन्यतमे लग्नगते प्रश्नलग्नस्थिते तदा गृहनिकटनिवासिना गृहं स्वगृहं तस्य निकटे समीपे निवासी स्थितस्तेनैव केनचिच्चोरितम् । वक्तव्यमिति शेषः । यदि प्रश्नलग्ने स्थिरराशौ वर्तमाने तदा तद् द्रव्यं तत्रस्थं तस्मिन्नेव स्थाने स्थितमिति वाच्यम् । यदि चरराशौ वर्तमाने लग्ने तदा तु भवनात् स्वगृहात् बहिर्गतं बाह्यस्थानचलितं वक्तव्यमिति । चेत् प्रश्नलग्ने द्विशरीरे द्विस्वभावराशौ वर्तमाने तदा तु द्रव्यं धनं गृहबाह्ये

स्वगृहस्य बहि भूमिगत पृथिव्या स्थितं विनिर्दिशेत् कथयेदिति । श्रीमान् पृथुयशास्तु प्रकारान्तरेणाह "आदिमध्यावसानेषु द्रेष्काणेषु विलग्नत । द्वारदेशे तथा मध्ये गृहान्ते च वदेद्धनमि"ति । लग्नेति । लग्नस्वामिसमान लग्न प्रश्नलग्न तस्य य स्वामी अधिप तत्समान तत्सदृश तस्करस्य चौरस्य जाती रूप च वदेत् कथयेत् । अर्थात् प्रश्नलग्नस्य स्वामिनो या जातिर्यद्रूप यद्वयश्च तत्सदृश तस्करस्यापि वाच्यमिति भाव ।

अधुना लाभालाभज्ञान दिग्ज्ञान चौरस्थ्याज्ञान चाह ।

पूर्णशरीरश्चन्द्रो, लग्नोपगत. शुभग्रहो वा स्यात् ।
सौम्यावलोकितं वा, भवनं शीर्षोदये लग्ने ॥ ५७ ॥

लाभगतैर्वा सौम्यै, राश्वेव धनस्य विनिर्दिशेल्लब्धिम् ।
लग्नाद् द्वितीयभवने, तृतीयके वा शुभग्रहैर्युक्ते ॥ ५८ ॥

प्रष्टा लभते वित्त, सौम्यैर्बन्धवस्तपष्ठदशमगतैः ।
केन्द्रस्थैर्दिग्वाच्या ग्रहैर्विलग्नादसंभवे वाऽन्न ॥ ५९ ॥

**पूर्णशरीर इति ।** लाभगतैरिति । प्रष्टेति च । पूर्णशरीर परिपूर्णमण्डलश्चन्द्र लग्नोपगत लग्ने समवस्थित अथवा शुभग्रहो लग्नस्थ अथवा भवन लग्न सौम्यै शुभग्रहैरवलोकित दृष्ट अथवा शीर्षोदये लग्ने वर्तमाने । कन्यातुलायुग्मघटालिसिंहा शीर्षोदयाख्या" इति शीर्षोदयलग्नान्युक्तानि । अथवा सौम्यै शुभग्रहै लाभगते प्रश्नलग्नादेकादशस्थानस्थितै तदाशु शीघ्रमेव धनस्य द्रव्यस्य चोरितस्य नष्टस्य वा लब्धिं प्राप्तिं विनिर्दिशेत् कथयेत् । लग्नात् प्रश्नलग्नात् द्वितीयभवने द्वितीयस्थाने अथवा तृतीयके तृतीयस्थाने शुभग्रहै पूर्णचन्द्रनिष्पापबुधगुरुशुक्रैर्युक्ते सहिते अथवा सौम्यै शुभग्रहै बुधचतुर्थ अस्त सप्तम षष्ठदशमौ प्रसिद्धौ तेषामन्यतमेषु गतै समवस्थितै प्रष्टा प्रश्नकर्ता वित्त धन लभते प्राप्नोति । केन्द्रस्थैर्ग्रहैर्दिग् दिशा वाच्या वक्तव्या । अर्थाद् सूर्यादिग्रहाणा मध्ये य कश्चिद् ग्रह लग्नचतुर्थसप्तमदशमानामन्यतमे स्थाने स्थितस्तस्य या दिक् तस्या चोरित धन गत वदेदिति भाव । 'प्राच्यादित सूर्यसितारराहुशनीन्दुविद्देवपुरोधसश्चे"ति ग्रहाणा दिशा उक्ता । विलग्नादिति । असंभवे केन्द्रे ग्रहासंभवे विलग्नात्प्रश्नलग्नाद् दिग्वाच्येति । "प्राची च याम्या त्वथ पश्चिमोत्तरा निर्मेषत" इति राशीना दिशा उक्ता आचार्यकथनमिव पृथुयशा अप्याह । 'पूर्ण शशी लग्नगत शुभो वा शीर्षोदये सौम्यनिरीक्षितश्च । नष्टस्य लाभ कुरुते तदाशु लाभोपयातो बलवान् च्छुभश्च । दिग्वाच्या केन्द्रगतैरसंभवे वा वदेद्विलग्नर्क्षात् । मध्याच्च्युतैर्विलग्नाभवाशवैर्योजना वाच्या । अशकाज्ज्ञायते द्रव्य द्रेष्काणैस्तस्करा स्मृता । राशिभ्य कालदिग्देशा वयोजातिश्च लग्नपादि 'ति ।

अधुना गर्भाधानहृतनष्टादौ प्रश्ने कालज्ञानमाह ।

उदयोपगतो राशि, स्तल्लिप्तीकृत्य लिप्तिका गुणयेत् ।
छायाङ्गुलैः पृथक्स्था, हृत्वा मुनिभिस्तथा शेषः ॥ ६० ॥

ग्रहगुणकारो ज्ञेयो, दैवविदा पंचविंशतिः सैका ।
मनवो गोऽष्टौ नितयं, भयाश्च सूर्यादितो ज्ञेयाः ॥ ६१ ॥
गुणयित्वैवं प्राग्वद्, शुभस्य शेषे भवेदुदयः ।
कार्यस्याप्तिः प्रष्टु, र्वक्तव्या नेतरैर्भवति ॥ ६२ ॥
गुणकारैक्यविभक्तः, कार्यः सूर्यादिगुणकसंशुद्धः ।
यस्य न शुद्ध्यति वर्गो, ज्ञेयस्तद्वर्गगः कालः ॥ ६३ ॥
आरदिवाकरशेषे, दिवसाः पक्षाश्च भृगुशशिनोः ।
गुर्वंवशेषे मासा, ऋतवः सौम्ये शनैश्चरेऽब्दाः स्युः ॥ ६४ ॥
आधानेऽर्थप्राप्तौ, गमनागमने पराजये विजये ।
रिपुनाशे वा कालं, पृच्छायां निश्चितं ब्रूयात् ॥ ६५ ॥

उदयोपगत इति । ग्रहगुणेति । गुणयित्वेति । गुणकारैक्येति । आरेति । आधा-
नेति च । उदयो लग्न तस्मिन् उपगत समवस्थितो यो राशिस्तस्य लिप्तीकृत्य कलीकृत्य
अर्थाल्लग्नगतराशिं विहाय शेषाशादीना कला कार्या इति भाव । लिप्तिका कला छाया
हुलैरभीष्टकाले द्वादशाङ्गुलशङ्कोर्या अङ्गुलात्मकच्छाया तया गुणयेत् हन्यात् । ततस्ते पृथ
क्स्था कार्या । एकत्र मुनिभि सप्तभिर्हत्वा भक्त्वा शेष शेषतुल्य दैवविदा ज्योति
र्विदा ग्रहगुणकार ग्रहाणा वक्ष्यमाणो यो गुणकार च ज्ञेयो बोध्य । अर्थाच्छेषपरिमि
तग्रहस्य यो वक्ष्यमाणगुणकार स एव गुणाको ज्ञेय इत्यर्थ । अथ पद्य प्रसिद्धा सैका
विंशतिरेकविंशति मनवश्चतुर्दश गावो नव अष्टौ प्रसिद्धा नितय नय भया एकादश
एते सूर्यादित सूर्यादीना गुणकारा ज्ञेया बोध्या । तेन शेषपरिमितग्रहस्य गुणकारेण
तान् पृथक्स्थानकान् गुणयेत् तत पृथक् स्थाप्या एकत्र एव प्राग्वत् सप्तभिर्हृत्वाविभज्य
चेच्छेषे शुभस्य शुभग्रहस्य उदयो भवेत् । अर्थात्सप्तभिर्भक्ते शेषतुल्ये शुभग्रहस्य सख्या
भवति चेत्तदा स शुभोदयो ज्ञेय इति भाव । शुभोदयत्वात् प्रष्टु प्रश्नकर्तु कार्यस्य
वाञ्छितप्रश्नस्य आप्तिर्लब्धिर्वक्तव्या कथितव्या । इतरै पापग्रहोदयैर्न भवति । प्रष्टु
कार्यप्राप्तिरिति शेष । ततस्ते पृथक्स्था अका गुणकाराणा यदैक्य तेन विभक्ता
विहृता यच्छेष तयावद्भि सूर्यादिग्रहाणा प्रोक्तगुणकै संशुध्यते तावद्भि शोधित का-
र्यम् । यस्य ग्रहस्य वर्गो गुणकारो न शुध्यति सशुद्धो न भवति चेत्तदा तस्य शुद्धग्रहस्य
सर्वग वर्गे प्राप्त काल समय । वक्तव्य इति शेष । आरो मगल दिवाकर सूर्य
तच्छेषे दिनसा दिनानि समयावधिर्ज्ञेय । भृगु शुक्र शशी चन्द्र तयो शेषे पक्षा
शेषतुल्यपक्षै कार्यस्य प्राप्तिर्भविष्यति । गुरुर्बृहस्पतिस्तस्मिन्नवशेषे मासा सौम्ये ऋतव
शनैश्चरे शनौ अब्दा वर्षाणि ज्ञेयानि । आधाने गर्भाधाने अर्थप्राप्तौ धनलब्ध्या गमने
यात्राया आगमने प्रवासिनो यात्रानिवृत्तौ पराजये रणभंगे विजये रणे प्राप्तकीर्त्तौ रिपु
नाशे शत्रूणा मरणे पृच्छाया प्रश्नसमये काल समय निश्चित निश्चयपूर्वक ब्रूयात्

अथोदाहरणम् । पौषकृष्णप्रतिपदि १ तत्रेष्टघटिकादि १० तत्समये प्रश्नलग्नं ९।१६।८।३४ धनुरर्कगतांशा १४ द्वादशाङ्गुलशङ्कोरिष्टच्छाया १४ स्पष्टलग्नस्य राशीं छायाङ्गुलानां कला जाता ९६८ एता लग्नघटिका छायाङ्गुलैश्चतुर्दशभि १४ र्गुणिते जाता १३५५२ एतेंका स्थानद्वये स्थाप्या १३५५२ एकस्था सप्ततष्टे शेष ७ तस्य सख्याया समं शनिस्तस्य गुणका एकादश ११ एभिर्गुणिता द्विष्ठा अङ्का जाता १४९०७२ एते स्थानद्वये स्थाप्या १४९०७२ एकत्र तेषा सप्तभिर्भागे शेष ७ तदङ्कप्रमाणेन सूर्यादिल नित्यसादशुभग्रहत्वादभीष्टकार्यस्य हानिर्वाच्येति । ततो द्विष्ठा १४९०७२ एतेषा ग्रहगुणकारैक्य ७१ मेकसप्ततिभक्ते लब्ध २९९ लब्धस्य प्रयोजन नास्त्यत्र तस्माच्छेषमेव ग्राह्य शेष ४३ शेषे त्रिचत्वारिंशन्मिते शने क्षेपा एकादश ११ पास्य शेष ३२ पुनरस्मिन् द्वात्रिंशन्मितेशेषे ३२ रवे क्षेपा पचा ५ पास्य शेष २७ पुनरस्मिन् सप्तविंशतिमिते शेषे २७ चन्द्रस्य क्षेपा एकविंशति २१ मपास्य शेष ६ पुनरस्मिन् षण्मिते शेषे अग्रे भौमस्य क्षेपा चतुर्दश १४ न शुध्यन्ति तस्मादत्र भौमोऽवशिष्टस्तस्माद् भौमशेषे रहिताङ्कगुणतुल्यदिनात्मक कालो वाच्य । षड्भिर्दिनैरभिलषितकार्यस्य हानिर्भविष्यतीति । अत्र ग्रहाणा पूर्वोक्ता ये गुणकारास्त एव क्षेपा बोध्या इति ।

अधुना रात्रौ तथा बहुप्रश्ने लग्नज्ञानमाह ।

**अकचटतपयशवर्गा, रविकुजसितसौम्यजीवसौराणाम् ।**
**चन्द्रस्य च निर्दिष्टा , प्रश्ने प्रथमोद्भवैर्वर्णैः ॥ ६६ ॥**
**ज्ञात्वा तस्माल्लग्नं, प्राज्ञः शुभाशुभं वदेत्प्रष्टु. ।**
**वर्गादिमध्यमान्त्यै,र्वर्णैः प्रश्नोद्भवैर्विषमम् ॥ ६७ ॥**
**रात्रौ लग्नं प्रवदे,च्छेषैर्युग्मं कुजज्ञजीवानाम् ।**
**सितरविजयोश्च नैवं, रविशशिनोरेकराशित्वात् ॥ ६८ ॥**
**तस्मात्प्राग्वत्प्रवदे,त्पृच्छासमये शुभाशुभं सर्वम् ।**
**कालस्य च विज्ञान,मेतच्चिन्त्यं बहुप्रश्ने ॥ ६९ ॥**

**अकचटेति** । ज्ञात्वेति । रात्राविति । तस्मादिति च । अवर्ग कवर्ग चवर्ग टवर्ग तवर्ग पवर्ग यवर्ग शवर्ग एतेऽष्टौ वर्गा क्रमत रवि सूर्य कुजो भौम सित शुक्र सौम्यो बुध जीवो गुरु सौर शनि चन्द्र प्रसिद्ध शशी चन्द्र तेषा निर्दिष्टा कथिता । एव पक्षसमत्वमप्युक्त "काद्यास्तु वर्गा कुजशुक्रसौम्यजीवार्कजाना क्रमशः प्रदिष्टा । रवेरकारात् क्रमश स्वरा स्युर्वर्णाष्टक यादिकशीतरश्मेरि"ति । प्रश्न इति । प्रश्ने प्रश्नसमये प्रथमोद्भवैर्वर्णै प्रश्नकर्तृणा मुखनि सृतानि नामानि तेषा ये प्रथमा आद्या वर्णा अक्षराणि तैर्लग्न मेषादि ज्ञात्वा बुद्ध्वा तस्माल्लग्नात् शुभाशुभ शुभफलमशुभफल च प्रष्टु प्रश्नकर्तु वदेत्कथयेत् । वर्गाणा अकारादीना आदि प्रथम मध्यमो मध्य अन्त्योऽन्तिम तैर्वर्णैरक्षरै । किंभूते प्रश्नोद्भवै प्रश्नसमये प्रष्टृमुखनि सृतारै । रात्रौ निशि विषमम् लग्न मेषमिथुनसिंहतुलाधनु कुम्भानामन्यतम प्रवदेत्कथयेत् ।

शेषे वर्गाणां द्वितीयचतुर्थवर्णे युग्मं समं वृषकर्ककन्यावृश्चिकमकरमीनानामन्यतम लग्नं कथयेत् । कदेत्याह । यदा प्रश्नकर्तुर्मुखनिस्सृत प्रथमो वर्णो कुजो भौम ज्ञो बुध जीवो गुरु तेषां सित शुक्र रविन शनि तयोश्च मध्ये यस्य कस्यचिदुक्तवर्गसम्बन्धी भवति चेत्तदा स वर्णो विषमो भवति तदा तस्य ग्रहस्य यो विषमराशिस्तदेव लग्नं यदि स च समसंख्याकस्तस्य य समराशिस्तदेव प्रश्नसमये लग्नं भवति । एवमेतादृश रविः सूर्य शशी चन्द्र तयोर्न स्यात् कस्मादेकराशित्वात् तयोरेकैकराशित्वस्मात् भवति यदि प्रष्टुर्मुखनिस्सृत प्रथमो वर्ण तयोर्मध्ये यस्य कस्यचिद् वर्गसंबधी भवति चेत्तदा तस्योक्तराशि तस्मिन् काले लग्नं वाच्यमिति । तस्माज्ज्ञातग्भात् पृच्छासमये सर्वं समस्त शुभाशुभं शुभफलमशुभफलं वा प्रश्नवत् पूर्वोक्तवत् प्रवदेत्कथयेत् । दैवज्ञ इति शेष । कदेत्याह । बहुप्रश्न प्रश्नबाहुल्ये एतत् कस्य समयस्य विज्ञानं विशेषज्ञानं चिन्त्य स्पष्टमिति ।

अधुना ग्रन्थकर्त्ता पद्येनैकेन ग्रंथमुपसंहरयति ।

**भट्टोत्पलेन शिष्याऽनुकम्पयालोक्य सर्वशास्त्राणि ।**
**आर्य्यासप्तत्येदं प्रश्नज्ञानं समासतो रचितम् ॥ ७० ॥**

**भट्टोत्पलेनेति ।** उत्पलाख्येन भट्टेन शिष्येभ्यश्छात्रेभ्य अनुकम्पया दयया सर्वशास्त्राणि समस्तज्योतिःसम्बन्धिशास्त्राणि आलोक्य दृष्ट्वा इदमेतत्प्रश्नज्ञानं आर्याछन्दसां सप्तत्या समासत क्रमतः रचितं प्रकटीकृतमित्यर्थ ।

गङ्गाया दक्षिणे भागे देशे वै गढपालके ।
खण्डग्रामे सुरुचिरे भारद्वाजकुले ह्यभूत् ॥ १ ॥
कल्यिरामो द्विजश्रेष्ठस्तस्माज्जाता सुतास्त्रयः ।
तेषां मध्ये कनिष्ठो य ख्यातिरामाभिधस्तत ॥ २ ॥
विप्रर्षभो रघुवरो दयालु सर्वधर्मवित् ।
तद्धर्मपत्नी कीर्त्याख्या तस्यां जातास्त्रय सुता ॥ ३ ॥
ज्येष्ठो मुकुन्दरामाख्यो गुरोश्चण्डीप्रसादत ।
लब्धविद्यस्त्विमां टीकामार्य्याणामाथ सम्रते ॥ ४ ॥
शकऽव्ययगाकभू १९७४ तुल्ये वत्सरे च सदसके ।
मासे पक्षेऽसिते पष्ठ्यां गुरावेषा समापिता ॥ ५ ॥ श्रीशुभमस्तु ।

इति श्रीगढवालदेशस्थ ढांगूमण्डलान्तर्गत खण्डग्रामनिवासि वडेथवाल
वंशावतंस श्रीमत्पण्डित रघुवरदत्तशर्म्मात्मज
श्रीमुकुन्दरामविरचिताऽऽशुबोधटीका
समाप्तिमगमदीति ।

---